# शुक्लयजुःप्रातिशाख्यम्।

महर्षिकात्यायनप्रणीतम्।

उव्वटकृतभाष्ययुतम्।

पण्डितकुलपतिना

बि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतं प्रकाशितञ्च।

द्वितीयसंस्करणम्।

कलिकातानगरे

सरस्वतीयन्त्रे

मुद्रितम्।

इं १८९३

প্রকাশক শ্রীজীবানন্দবিদ্যাসাগর বি, এ,

২ নং রমানাথমজুমদারের ষ্ট্রীট্ কলিকাতা।

প্রিণ্টর শ্রীক্ষেত্রমোহনমুখোপাধ্যায়

৫৩ নং আমহার্ষ্ট ষ্ট্রীট্ কলিকাতা।

 एतानि मुद्रितसंस्कृतपुस्तकानि।





१ आशुबोध व्याकरणम्
२ अष्टकम् पाणिनीयम्
३ उणादिसूत्रम् सटीक २
४ कविकल्पद्रुम (धातुपा:) ।०
५ कलापव्याकरणं वा कातन्त्र २
६ धातुरूपादर्श: १॥०
७ परिभाषेन्दुशेखर सटीक १
८ मुग्धबोधव्याकरणम् सटीक १॥०
९ वाक्यमञ्जरी (बङ्गाक्षरै:) ।०
१० वैयाकरणभूषणसार ॥०
११ लघुकौमुदीव्याकरणम् ॥०
१२ लिङ्गानुशासनं सटीक ।०
१३ शब्दरूपादर्श: ॥०
१४ शब्दार्थरत्नम् ॥।०
१५ सारस्वतव्याकरण सटीक पूर्वार्द्धम् १
१६ सारस्वतव्याकरणं सटीक उत्तरार्द्धं २
१७ सिद्धान्तकौमुदी सरलासहिता १०
१८ ऋतुसंहार काव्य सटीक ।/
१९ काव्यसंग्रह मूलमात्र ५
२० काव्यसंग्रह सटीक प्रथमभाग: ३
२१ काव्यसंग्रह सटीक द्वितीयभाग: २
२२ काव्यसंग्रह सटीक तृतीयभाग: २
२३ किरातार्जुनीयकाव्य सटीक १॥०
२४ कुमारसम्भवकाव्यपूर्वखण्ड सटीक ॥०
२५ कुमारसम्भवकाव्य उत्तरखण्डसटीक ॥
२६ गीतगोविन्द काव्य सटीक ॥०
२७ चन्द्रशेखरचम्पूकाव्य ३
२८ नलोदय काव्य सटीक ।/
२९ नैषधचरितम् काव्य सम्पूर्ण सटीक ५
३० नैषधकाव्य नवमसर्गपर्य्यन्त सटीक २॥
३१ पुष्पबाणविलास काव्य सटीक ॥०
३२ विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) ॥०
३३ भट्टिकाव्य टीकाद्वयसहित २
३४ भामिनीविलासकाव्य सटीक ॥०
३५ भामिनीविलास संक्षिप्तटीकासह ।०
३६ चम्पूरामायणम् सटीक १
३७ (चम्पूरामायणम्) भोजचम्पू ॥०
३८ शतकावलि: ॥०
३९ माधवचम्पूकाव्य ।०
४० मेघदूत मल्लिनाथकृत टीकासहित ।/
४१ मेघदूत सटीक सुलभमूल्यकम् /०
४२ रघुवंश काव्य सटीक १॥०
४३ रघुवंश मूलमात्र ७,८,१२ सर्गा: /०
४४ रामप्रशस्ति सटीक /
४५ शिशुपालवधकाव्य सटीक (माघ) २
४६ गद्यकथासरित्सागर सम्पूर्ण ६
४७ कादम्बरी विस्तृतव्याख्यासहिता ३
४८ दशकुमारचरितगद्यकाव्य सटीक १
४९ द्वात्रिंशत्पुत्तलिकासिंहासन १
५० पञ्चतन्त्रम् विष्णुशर्मकृत सटीक १
५१ बहुविवाहवाद ।०
५२ वासवदत्ता गद्यकाव्य सटीक १
५३ बेतालपञ्चविंशति: (सरलगद्य) ॥०
५४ शङ्करविजय १॥०
५५ भोजप्रबन्ध सरल गद्य ॥०
५६ हर्षचरित सटीक बाणभट्टकृत २॥०
५७ हर्षचरितबाणभट्टकृतगद्य १
५८ संस्कृतशिक्षामञ्जरी प्रथमभाग: /
५९ संस्कृतशिक्षामञ्जरी द्वितीयभाग: ।०
६० संस्कृतशिक्षामञ्जरी तृतीयभाग: ॥०
६१ संस्कृतशिक्षामञ्जरी चतुर्थभाग: ।०
६२ हितोपदेश सटीक ॥०
६३ अमरकोष ॥०
६४ वाचस्पत्यम् (बृहदभिधान) १००
६५ मेदिनीकोष १
६६ शब्दस्तोममहानिधि: ८
६७ अनर्घराघवनाटक सटीक [मुरारि] २
६८ अनर्घराघवनाटक मूलमात्र १

६९ उत्तररामचरितनाटक सटीक १
७० कर्पूरमञ्जरीनाटिका सटीक ॥०
७१ चण्डकौशिकनाटक सटीक ॥०
७२ चैतन्यचन्द्रोदयनाटक सटीक २
७३ धनञ्जयविजयनाटक सटीक ।०
७४ नागानन्दनाटक सटीक ॥०
७५ नागानन्दनाटक मूल ।०
७६ प्रबोधचन्द्रोदयनाटक सटीक १
७७ प्रसन्नराघवनाटक जयदेवकृत १
७८ प्रियदर्शिका नाटिका सटीक ॥०
७९ वसन्ततिलक भाण नाटक ।/
८० बालरामायणनाटक सटीक २
८१ विक्रमोर्वशी नाटक (सटीक) १
८२ विद्धशालभञ्जिकानाटिका सटीक॥०
८३ वेणीसंहारनाटक सटीक ॥०
८४ मल्लिकामारुतनाटक सटीक २
८५ महानाटक हनुमन्नाटक सटीक १॥
८६ महानाटकम् (हनुमन्नाटकम्) ॥०
८७ महावीरचरितनाटक सटीक १॥०
८८ महावीरचरितनाटक मूलमात्र ॥०
८९ मालतीमाधवनाटक सटीक ॥०
९० मालविकाग्निमित्रनाटक सटीक १
९१ मुद्राराक्षसनाटक सटीक १
९२ मृच्छकटिकनाटक सटीक १॥०
९३ रत्नावलीनाटिका सटीक ॥०
९४ शकुन्तलानाटक सटीक १
९५ काव्यप्रकाश अलङ्कार सटीक ४
९६ काव्यादर्श सटीक (अलङ्कार) १
९७ काव्यदीपिका अलङ्कार सटीक ॥०
९८ कुवलयानन्द अलङ्कार सटीक २
९९ चन्द्रालोक प्राचीन अलङ्कार ।०
१०० दशरूपकम् ( अलङ्कार ) १
१०१ साहित्यदर्पण सटीक अलङ्कार १॥
१०२ साहित्यदर्पणम् ( मूलमात्र ) ॥०

दायभाग सटीक १\

१०३ काव्यालङ्कारसूत्रवृत्तिवामनकृत ॥०
१०४ वाग्भटालङ्कार ।०
१०५ सरस्वतीकण्ठाभरण सटीक २
१०६ सङ्गीतपारिजात[सङ्गीतशास्त्र]१॥०
१०७ छन्दोमञ्जरी वृत्तरत्नाकर सटीक ॥
१०८ श्रुतबोधः (छन्दोग्रन्थ) टीका /
१०९ पिङ्गलछन्दः शास्त्र वृत्तिसहित १॥
११० महानिर्वाणतन्त्रम् सटीक ४
१११ शारदातिलक तन्त्रम् २
११२ मन्त्रमहोदधि तन्त्र सटीक २
११३ रुद्रयामल तन्त्र २
११४ इन्द्रजालविद्यासंग्रहः २
११५ कामन्दकी नीतिसारः ॥०
११६ चाणक्यशतकम् सटीक /
११७ शुक्रनीतिसारः सटीक २
११८ गयाश्राद्धादिपद्धतिः १
११९ तुलादानादिपद्धतिः (बल्लालसेनेः)४
१२० धर्मशास्त्रसंग्रहः १०
१२१ वीरमित्रोदय (स्मृतिशास्त्र) ५
१२२ मनुसंहिता कुल्लूकभट्टकृत टीका-
सहित २
१२३ वेदान्तदर्शन सभाष्य सटीक ६
१२४ भामती(वेदान्त)वाचस्पतिमिश्रकृत४
१२५ वेदान्तपरिभाषा ॥०
१२६ वेदान्तसार सटीक ॥०
१२७ विवेकचूडामणि वेदान्त ।/
१२८ पञ्चदशी (सटीक) वेदान्त १॥०
१२९ सिद्धान्तबिन्दुसारः (वेदान्त) ॥०
१३० पूर्वप्रज्ञदर्शनम् सभाष्य ॥०
१३१ साङ्ख्यदर्शन ( भाष्यसहित ) २
१३२ सांख्यसूत्र अनिरुद्धवृत्तिसहित ॥०
१३३ साङ्ख्यसार ।०
१३४ सांख्यतत्त्वकौमुदी सटीक २
१३५ सांख्यकारिका गौड़पादभाष्य ॥०

आश्वलायनगृह्यसूत्र सभाष्य ३\



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

*PANDIT JIBANANDA VIDYASAGARA, B. A.*

*Superintendent Free Sanskrit College, Calcutta.*

# शुक्लयजुःप्रातिशाख्यम् ।



## प्रथमोऽध्यायः ।

यस्य भृङ्गावलिः कण्ठे स्रुतदानाम्बुपूरिते ।
भाति रुद्राक्षमालेव स वः पायाद् गणाधिपः ॥ १ ॥
प्रणम्य परमात्मानं व्याख्यास्ये प्रातिशाख्यकम् ।
सरस्वतीं च जगतस्तमोनाशनदीपिकाम् ॥ २ ॥
जपादौ नाधिकारोऽस्ति सम्यक्पाठमजानतः ।
प्रातिशाख्यमतो ज्ञेयं सम्यक्पाठस्य सिद्धये ॥ ३ ॥

### स्वरसंस्कारयोश्छन्दसि नियमः ॥ १ ॥

स्वर उदात्तानुदात्तस्वरितप्रचितलक्षणः । संस्कारो लोपागमवर्णविकारप्रकृतिभावलक्षणः । तयोः स्वरसंस्कारयोः छन्दसि विषये नियमोऽधिकृतो वेदितव्यः । प्रतिज्ञासूत्रमेतत् प्रतिज्ञा च शिष्यबुद्धिसमाधानार्था ॥

### लौकिकानामर्थपूर्वकत्वात् ॥ २ ॥

लोके विदिता लौकिकाः लौकिकानां शब्दानामर्थपूर्वकत्वात्प्रयोजनपूर्वकत्वादस्मिन् शास्त्रे नियमो न क्रियते कथं प्रयोजनपूर्वकत्वम् कथं प्रयोजनपूर्वकाणां शब्दानां नियमो न क्रियते आह देवदत्त गामभ्याज शुक्लां दण्डेनेति यस्य पुरुषस्य देवदत्तकर्तृका गोत्वजात्युपलक्षितशुक्लद्रव्यकर्मिका दण्डकरणिकाऽभ्याजनक्रियाऽभिप्रेता स एवैतद्वाक्यं ब्रवीति । न तत्सर्वः यतोऽर्थपूर्वकत्वं लौकिकानां शब्दानाम् अर्थपूर्वकत्वे

सत्यर्थाभावे नोच्चारणं लौकिकानां शब्दानां, छन्दसि पुनरह-रहः स्वाध्यायमधीयीतेति श्रुतिचोदनात् अतः सदाकालं छान्दसानां शब्दानामभ्यासः श्रुत्या विधीयते पुरुषस्याभ्युदयार्थम् अतस्तद्विषय एव स्वरसंस्कारयोर्नियम आरभ्यते न लौकिकानामर्थपूर्वकत्वात् ॥

## न समत्वात् ॥ ३ ॥

नकारः प्रतिषेधवाच्युभयत्र सम्बध्यते काकाक्षिवत् न चैतद् यद्वैदिकानां शब्दानां स्वरसंस्कारनियमोऽभ्युदयहेतुः किं तर्हि लौकिकानामपि नियमोऽभ्युदयहेतुरेव कुतः समत्वात् तुल्यत्वाच्छब्दानां य एव वैदिकास्त एव लौकिकास्त एव तेषामर्था इति अतो यदुक्तं वैदिकानामेव स्वरसंस्करणमभ्युदयहेतुरित्येतन्न समत्वात् ॥

## स्याद्वाम्नायधर्मित्वाच्छन्दसि नियमः ॥ ४ ॥

आम्नायो वेदस्तस्य धर्म आम्नायधर्मः आम्नायधर्मो विद्यते यस्य शब्दग्रामस्य स आम्नायधर्मी तस्य भाव आम्नायधर्मित्वम् तस्मादाम्नायधर्मित्वात् भवेद्वा छन्दसि शब्दानां स्वरसंस्कारनियमोऽभ्युदयाय महते स्याच्छन्दसि नियमो महोदयः कतमत्तदाम्नायधर्मित्वं [illegible] आह आम्नायः क्रियार्थो यज्ञार्थश्च । तद्यथा ब्राह्मणं विध्यर्थवादरूपम् मन्त्रस्तु कर्माङ्गभूतद्रव्यदेवतास्मारकः मन्त्रेण स्मृतं कर्म कर्त्तव्यमिति नियमार्थं वचनम् मन्त्रस्तु यदि मनागपि स्वरतो वर्णतो वा हीनो भवति तत्र कर्मासमृद्धिः न केवलं कर्मासमृद्धिः किन्तर्हि दुरिष्टहेतुः प्रत्यवायः स्यात् । उक्तं च मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादिति दुष्प्रयुक्तमन्त्रविषयो

निन्दार्थवादः तथा स्वाध्यायविषयः फलार्थवादो भवति घृतकुल्यामधुकुल्याः पितॄन् स्वधा अभिवहन्तीति न तु लौकिकशब्दविषयमिदं किञ्चिदुपलभ्यते अतः स्वरसंस्कारयोश्छन्दसि नियमो मह्योदय इति ॥

## यत्तन्न ॥ ५ ॥

एवं स्वरसंस्कारौ छन्दसि विषये प्रतिज्ञातौ छन्दोविषये मह्योदयफलावित्यवधार्य, अधुना शब्दस्वरूपजिज्ञापयिषयेदमाह। यत् न ज्ञायते शब्दस्य कारणभूतं तद् वक्ष्याम इति सूत्रशेषः ॥

## वायुः खात् ॥ ६ ॥

वायुः कारणभूतः शब्दस्य स च खादाकाशादुत्पद्यते ॥

## शब्दस्तत् ॥ ७ ॥

शब्दस्तदात्मको वाय्वात्मक इत्यर्थः ॥

## सङ्करोप ॥ ८ ॥

यदि वाय्वात्मकः शब्दः वायोः सर्वगतत्वात् सदाकालं सर्वत्रोपलब्धिः प्राप्नोतीत्याशङ्क्याह। सङ्करोपेति। सम्यक्करणैरुपहितो हृदि वायुर्वेणुशङ्खादिभिः शब्दीभवति ॥

## ससङ्घातादीन् वाक् ॥ ९ ॥

यो वायुः सम्यक्करणैरुपहितो वेणुशङ्खादिभिः शब्दीभवति स एव सङ्घातादीन् प्राप्य वाग् भवति सङ्घातः पुरुषप्रयत्नः स आदौ येषां स्थानादीनां ते सङ्घातादयः तान् प्राप्य वाग्भवति वर्णो भवतीत्यर्थः ॥

## त्रीणि स्थानानि ॥ १० ॥

सङ्घातः पुरुषप्रयत्न इत्युक्तम्। अधुना सङ्घात आदिभूतो येषां स्थानादीनां तान्युच्यन्ते त्रीणि स्थानानि वायोर्भवन्ति उरःकण्ठशिरात्मकानि शरीरे॥

द्वे करणे ॥ ११ ॥

संवृतविवृताख्ये वायोर्भवतः॥

शरीरात् ॥ १२ ॥

ये एते करणे संवृतविवृताख्ये यानि च त्रीणि स्थानानि शरीराद्वायोर्निर्गच्छतस्तानि भवन्ति यानि पुनरुपरिष्टाद्वक्ष्यति स्थानकरणानि तानि मुखस्थानानि अत एवमाह शरीरादिति॥

शरीरम् ॥ १३ ॥

एवमेतेन प्रकारेण शरीराद्वायुर्निर्गच्छन् कादिवर्णविशेषव्यक्तिमापद्यते॥

शारीरे ॥ १४ ॥

किं शरीराद्वायुर्निर्गच्छन्मात्रादिवर्णविशेषव्यक्तिमापद्यते नेत्याह शरीरे शरीरैकदेशे मुखे प्राप्तो वायुस्ताल्वादिस्थानेषु निषक्तः करणेन विशेषव्यक्तिरूपेण वर्णत्वमापद्यते॥

तेषाꣳ समूहात् स उदयँस्त्रैकाल्यम् ॥१५॥

तेषां स्थानकरणप्रयत्नानां सम्बन्धिनः समूहात् स उदयन् वायुरुद्गच्छन् त्रैकाल्यमभिधत्ते त्रयः कालाः समाहृताः त्रिकालम् त्रिकालमेव त्रैकाल्यं स्वार्थे ष्यञ्। त्रिकालसम्बद्धमर्थजातं भवद्भूतभविष्यत्सम्बद्धमर्थजातम्। वायुर्वर्णीभूतः पदवाक्यैरभिधत्ते त्रिकालसम्बद्धस्यार्थजातस्य वायुः शब्दरूपेण प्रकाशको भवतीत्यर्थः। वायोरियं विभूतिर्या त्रयी विद्येति॥

## ओङ्कारः स्वाध्यायादौ ॥ १६ ॥

यत्तन्नेत्येवमादिना वायुः पदवाक्यरूपेण सर्वं प्रकाशय-तीत्युक्तम्। अधुना स्वाध्यायविधिरुच्यते ओङ्कारः स्वाध्यायादौ कर्त्तव्य इति सूत्रशेषः। तथा चाह मनुः ब्रह्मणः प्रणवं कुर्य्या-दादावन्ते च सर्वदा। स्त्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशी-र्य्यते इति ॥

## ओङ्काराथकारौ ॥ १७ ॥

ओङ्कारोच्चारणं स्वाध्यायादौ प्रतिज्ञातमेव तत्तुल्यफलोऽथ-शब्दोऽपीति सूत्रार्थः। तथा चोक्तम्। ओङ्कारश्चाथकारश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तेनेमौ मङ्ग-लावुभौ ॥

## ओङ्कारं वेदेषु ॥ १८ ॥

एवमधस्तनसूत्रेण ओङ्काराथशब्दयोः स्वाध्यायादाववि-शेषेणोच्चारणमुक्त्वाऽनेन सूत्रेण व्यवस्था क्रियते ओङ्कारं वेदेषु प्रयुञ्जीतेति सूत्रशेषः ॥

## अथकारं भाष्येषु ॥ १९ ॥

भाष्येषु ग्रन्थेषु अथकारं प्रयुञ्जीतेति सूत्रशेषः ॥

## प्रयतः ॥ २० ॥

प्रयतः शुचिरुच्यते पादशौचाचमनादिना शुचिरधीयीते-त्यर्थः ॥

## शुचौ ॥ २१ ॥

शुचौ विविक्तदेशेऽधीयीत। उक्तञ्च। द्वावेव वर्जयेन्नित्य-मनध्यायौ प्रयत्नतः। स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः ॥

इष्टम् ॥ २२ ॥

अभिरुचितमासनमासीनः ॥

ऋतुं प्राप्य ॥ २३ ॥

हेमन्तमृतुं प्राप्य रात्रयाश्चतुर्थप्रहरेऽधीयीत ॥

योजनान्न परम् ॥ २४ ॥

अधीयानो योजनात् परमध्वानं न गच्छेत् ॥

भोजनं मधुरꣳ स्निग्धम् ॥ २५ ॥

मधुररसप्रायं घृतप्रायं चान्नं भुञ्जीत ॥

वर्णदोषविवेकार्थम् ॥ २६ ॥

अकारादयो वर्णाः तेषां दोषाः तेषां विवेचनाय नानाकरणाय तद्यथा त्रिमात्रिकस्य स्वरस्य द्विमात्रता द्विमात्रिकस्य मात्राकालता अनुनासिकस्य स्वरस्यैकदेशरक्तता यथा मन्द्रादन्द्र इति तथा व्यञ्जनानामनेकप्रकारा दोषाः सम्भवन्ति अयमपि वक्ष्यति ऊष्मभ्यः पञ्चमेषु यमापत्तिर्दोष इति ॥

तिङ्कृत्तद्धितचतुष्टयसमासाः शब्दमयम् ॥२७॥

यत्किञ्चिच्छब्दमयमुपलभ्यते त्रयीलक्षणं तत् तिङ्कृत्तद्धितचतुष्टयसमासाः तिङ खलु आख्यातका भवन्ति पचति पठतीत्येवमादयः। कृतः कर्त्ता कारक इत्येवमादयः। तद्धिताः आग्नेयः सारस्वत इत्येवमादयः। चतुःप्रकाराः समासाः अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहयः । अव्ययीभावो यथा मम भूमि उपरिनाभि। तत्पुरुषो यथा प्रजापतिः वृत्रहा। द्वन्द्वो यथा इन्द्राग्नी मित्रावरुणौ। बहुव्रीहिर्यथा शुक्लबालः सर्वशुक्लबालः ॥

तां वाचमोङ्कारं पृच्छामः ॥ २८ ॥

तिङ्कृत्तद्धितचतुष्टयसमासलक्षणां तामित्थं भूतां वाचम् ओङ्कारं पृच्छामः ओङ्कारो वाचः पुत्रः स पृष्टः सन् स्वाध्यायादावुच्चारणेन स्वां मातरमर्थतो ग्रन्थतश्च कथयिष्यति अतः स्वाध्यायादौ प्रणवः कार्य्यः। द्विकर्मा च पृच्छतिर्धातुः। अतो वाक्शब्दे ओङ्कारशब्दे च द्वितीया। माणवकं पन्थानं पृच्छतीति यथा॥

## अथ शिक्षा विहिताः॥ २९॥

अथेत्ययं शब्दो विशेषाधिकारार्थः शिक्षाविहिताः स्थानकरणास्यप्रयत्नादयोऽभिधीयन्ते इत उत्तरमधिकारद्वयानुवृत्तिर्द्रष्टव्या। स्वरसंस्कारानुवृत्तिः शिक्षाविहितानुवृत्तिश्च॥

## सवनक्रमेणोरःकण्ठभ्रूमध्यानि॥ ३०॥

अधस्तादुक्तं समस्तातादीन् प्राप्य वाक् तस्यास्त्रीणि स्थानानि। ननु कतमानि तानीत्युक्तम् इह तु शिक्षाप्रक्रमात्तत्पर्य्यायेणोच्यन्ते सवनक्रमेणोरःकण्ठभ्रूमध्यानि। प्रातःसवनमाध्यन्दिनतृतीयसवनक्रमेण उरःकण्ठभ्रूमध्यानि त्रीणि स्थानानि वायोर्भवन्ति॥

## आयाममार्दवाभिघाताः॥ ३१॥

एवमेतेषु स्थानेषु वर्णेषूच्चार्य्यमाणेषु त्रयो विकाराः शरीरस्य पर्य्यायेण भवन्ति आयाममार्दवाभिघाताः आयामो नाम ऊर्द्ध्वगमनं शरीरस्य। मार्दवं नामाधोगमनं गात्राणाम् अभिघातस्तिर्य्यग्गमनं गात्राणाम्॥

## उच्चनीचविशेषः॥ ३२॥

योऽयन्नामाभिघातः स्वरितः स उच्चनीचविशेषः उच्चनी-

चाभ्यामभिनिवर्त्यन्ते। एवं शरीरस्य प्रयत्नेन ये निवर्त्यन्ते तेषामुपरिष्टात् संज्ञां वक्ष्यति उच्चैरुदात्त इत्येवमादिना ॥

## अथाद्याः समाम्नायाधिकाः प्राग्रिफितात् ॥ ३३ ॥

अथशब्दो मङ्गलार्थः संज्ञाः समाम्नायाधिकाः वर्णसमाम्नायं वक्ष्यति अथातो वर्णसमाम्नायं व्याख्यास्याम इति। तस्मादधिकाः प्राग्रिफितात् रिफितसंशब्दनात्प्राक् वक्ष्यति विसर्जनीयो रिफित इति तस्मात्प्राक् उपलक्षणार्थमेतत् परिभाषाप्यत्र भविष्यति तद्यथा ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात् प्रथमग्रहणे वर्गमिति ॥

## उपदिष्टा वर्णाः ॥ ३४ ॥

वर्णसमाम्नाये कथिता वर्णाः तद्यथा किति खिति गिति घिति ङिति कवर्गः अथवा ये पदेषूपदिष्टा वर्णास्त एव प्रत्येतव्याः अन्यद्व वनाद्भविष्यति तद्यथा इषे त्वा अत्र संहितायामपि न वर्णान्यत्वम् वचनात् संहितायां विकारा भविष्यन्ति तांस्तत्रैव वक्ष्यामः। अथवा पदेषु सङ्ख्योपदिष्टा वर्णाः कर्त्तव्याः तद्यथा इषे त्रिवर्णं पदम्। त्वा त्रिवर्णं पदम्। ऊर्जे पञ्चवर्णं पदम्। उक्तं च स्वरो वर्णोऽक्षरं मात्रा तत्प्रयोगार्थ एव च। मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे इति ॥

## अन्त्याद्वर्णात् पूर्व उपधा ॥ ३५ ॥

अन्ते भवोऽन्त्यो वर्णः ककारादिः अन्त्याद्वर्णात् पूर्व उपधासंज्ञो भवति तद्यथा महान् इन्द्र इति अत्र नकारस्याकार उपधासंज्ञकः। संज्ञाकरणे प्रयोजनं वक्ष्यति अनुनासिकमुपधा प्रागन्तस्थाया इति ॥

## निर्देश इतिना ॥ ३६ ॥

वर्णानां निर्देश इतिना भवति तद्यथा कितिखितिगिति-घितिङिति कवर्ग इति ॥

## कारेण च ॥ ३७ ॥

कारप्रत्ययेन च वर्णानां निर्देशो भवति तद्यथा यकार-वकारयोर्जास्त्ये पद इति ॥

## अव्यवहितेन व्यञ्जनस्य ॥ ३८ ॥

अकारव्यवहितेन कारप्रत्ययेन व्यञ्जनस्य निर्देशो भवति यथा ककारपकारयोः सकारमिति व्यञ्जनस्येति किम् अकार इकार उकार इति ॥

## र एफेन च ॥ ३९ ॥

रः रेफस्य एफेन च निर्दिश्यते यथा रेफठं॰ स्वरधाविति चशब्दादितिना च यथा यितिरितिलितिविति ॥

## स्वरैरपि ॥ ४० ॥

स्वरैरपि व्यञ्जनानां निर्देशो भवति यथा नु चछयोः शम् तथयोः समिति ॥

## नानुस्वारयमविसर्जनीयजिह्वामूलीयोपध्मा-नीयाः ॥ ४१ ॥

वक्ष्यति अं इत्यनुस्वारः तथा कुं खुं गुं घुं इति यमाः तथा अः इति विसर्जनीयः। तथा ᳵक इति जिह्वामूलीयः। ᳶप इत्युपध्मानीयः एते न कारप्रत्ययेन निर्देष्टव्याः यथा अनुस्वारठं॰ रोषस्तु मकार इति अनुस्वारस्य स्वशब्देनैव निर्देशः तथा अभ्यः पञ्चमेषु यमापत्तिर्दोष इति यमस्य स्वशब्देनैवो-

पादानम्। तथा विसर्जनीयस्य विसर्जनीय इति। तथा जिह्वामूलीयोपध्मानीयौ शाकटायन इति॥

## दन्त्यस्य मूर्द्धन्यापत्तिर्नतिः॥ ४२॥

दन्त्यस्य मूर्द्धन्यभावो नतिरुच्यते तद्यथा परिसिञ्चन्ति परिषिञ्चन्ति संज्ञाकरणे प्रयोजनं क्षिति चानताविव्यादि॥

## समानस्थानकरणास्यप्रयत्नः सवर्णः॥४३॥

समानमेकं स्थानं करणमास्यप्रयत्नश्च यस्य स एवमुच्यते यो यस्य वर्णस्य समानस्थानः समानकरणः समानमुखप्रयत्नः स तस्य सवर्णसंज्ञो भवति। तद्यथा प्र अर्पयतु प्रार्पयतु तव अयम् तवायम्॰ सोमः स्रुचि इव स्रुचीव घृतम् अभि इन्धताम् अभीन्धतां मुखे अमु उज्ञेषम् अनूज्ज्ञेषं वाजस्य अनु उज्ज्ञयताम् अनूज्ज्ञयताम् ऋकारऌकारयोरपि सवर्णदीर्घत्वमेव भवति यद्युदाहरणं छन्दसि लभ्यते सञ्ज्ञाकरणे प्रयोजनं वक्ष्यति। सिम्॰ सवर्णे दीर्घमिति॥

## सिमादितोऽष्टौ स्वराणाम्॥ ४४॥

वर्णसमाम्नायस्यादौ अष्टानां स्वराणां सिम् संज्ञा भवति अष्टाविति विभक्तिव्यत्ययेन षष्ठीबहुवचनं द्रष्टव्यं स्वराणामिति सामानाधिकरण्यात् यथा अआइईउऊऋॠ वर्णसमाम्नाये त्रिमात्रा अपि वक्ष्यन्ते इह सन्धौ तु तेषां ग्रहणं न सम्भवति प्रयोजनाभावात् त्रिमात्रान् हि स्वयमेव वक्ष्यति सर्वमग्नाऽ३इ लाजीं३ छाची३नित्ति त्रिमात्राणि चेत्यादिना सवर्णदीर्घत्वं च सञ्ज्ञाकरणे प्रयोजनम् न च सवर्णदीर्घत्वमुक्तानां प्लुतानां च सम्भवति अतः प्लुता न गृह्यन्ते। संज्ञाकरणे प्रयोजनं वक्ष्यति सिम्॰ सवर्णे दीर्घमिति॥

## सन्ध्यक्षरं परम् ॥ ४५ ॥

स्वराणामित्यनुवर्त्तते स्वराणां यत्परमन्त्यमक्षरं तत्सन्ध्यक्षरसंज्ञं भवति सन्ध्यक्षरमिति जातावेकवचनम् यथा पक्वो यव इति सन्ध्यक्षराणि पराणीत्यर्थः तानि चत्वारि द्विमात्राणि गृह्यन्ते न प्लुतान्यपि प्रयोजनाभावात् प्रयोजनार्थं च संज्ञापरिभाषाः क्रियन्ते। अतो द्विमात्राण्येव गृह्यन्ते। न सर्वाणीति। वर्णसमाम्नाये तु सर्वेषां वर्णानां पाठो युक्तरूप एव तत्र हि एतावन्तो वर्णाः सम्भवन्तीत्येतदेव ख्याप्यते अतस्तत्र सर्वेषां पाठो युक्तरूप एवेत्यदोषः इह तु कार्य्यवन्त एवोपदिश्यन्ते। तद्यथा ए ऐ ओ औ संज्ञायाः प्रयोजनं सन्ध्यक्षरमयवायावमिति ॥

## अकण्ठ्यो भावी ॥ ४६ ॥

स्वराणामित्येव कण्ठ्यौ अकाराकारौ वर्जयित्वा स्वराणां भाविसंज्ञा भवति तद्यथा इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ। संज्ञाकरणे प्रयोजनं वक्ष्यति भाव्युपधस्वरीद्विसर्जनीय इति ॥

## व्यञ्जनं कादि ॥ ४७ ॥

ककारादि ऊष्मान्तं यद्वर्णजातं तद् व्यञ्जनसंज्ञं भवति क्रितिखितिगितिघितिङिति इत्यादि अं इत्यनुस्वार एतदन्तम् संज्ञाकरणे प्रयोजनं व्यञ्जनमर्द्धमात्रेत्यादि ॥

## अनन्तरः संयोगः ॥ ४८ ॥

अनन्तरमव्यवहितं व्यञ्जनं व्यञ्जनेन सह संयोगसंज्ञं भवति तद्यथा पक्वम् क्तितिक्तितिखिति अश्वः श्मिस्मिश्मितिविति

संज्ञाकरणे प्रयोजनं वक्ष्यति स्वरात् संयोगादिर्द्विरुच्यते सर्वत्रेति॥

## स्पर्शेष्वेव सङ्ख्या॥ ४९॥

ककारादयः पञ्चवर्गाः पञ्चवर्णाः समाम्नाये स्पर्शसंज्ञा उक्ताः तेषु वर्गेषु संख्या ज्ञातव्या वक्ष्यति असस्थाने मुदि द्वितीयठं॰ शौनकस्य पञ्चमे पञ्चममिति परिभाषासूत्रमेतत्॥

## द्वौ द्वौ प्रथमौ जित्॥ ५०॥

स्पर्शेष्वेव संख्येति परिभाषितमेव अतस्तस्याः परिभाषाया इहोपस्थानम् द्वौ द्वौ प्रथमौ वर्णौ वर्गे वर्गे जित्संज्ञौ यथा। क ख च छ ट ठ त थ प फ संज्ञाकरणे प्रयोजनम् लुङ् मुदि जित्पर इति॥

## ऊष्माणश्च हवर्जम्॥ ५१॥

ऊष्माणश्च जित्संज्ञका भवन्ति। हकारं वर्जयित्वा तद्यथा शषसाः च शब्दात् द्वौ द्वौ प्रथमौ वर्गे वर्गे क ख च छ ट ठ त थ प फ एते त्रयोदशवर्णा जित्संज्ञा वेदितव्याः॥

## मुच्च॥ ५२॥

मुत्संज्ञकाः शषसा भवन्ति च शब्दाज्जित्संज्ञकाश्च शषसेष्वेव मुत्संज्ञा यथा स्यादिति पृथग्योगकरणम्। संज्ञायाः प्रयोजनं लुङ्मुदि जित्पर इति॥

## धिशेषः॥ ५३॥

कृतसंज्ञकेतरवचनः शेषशब्दः शेषो यो वर्णराशिः स धिसंज्ञो भवति तद्यथा वर्गाणामुत्तरास्त्रयो यरलवहकाराश्चेति विंशतिवर्णा धिसंज्ञा भवन्ति संज्ञाकरणे प्रयोजनम् रेफठं॰ स्वरधाविति॥

## द्वितीयचतुर्थाः सोष्माणः ॥ ५४ ॥

द्वितीयाः ख छ ठ थ फाश्चतुर्था घ झ ढ ध भाः एते दशवर्णाः सोष्मसंज्ञा भवन्ति इह यासां संज्ञानां शास्त्रे संव्यवहारो नोपलभ्यते पूर्वाचार्य्यसंज्ञास्ता वेदितव्याः शिष्यसंव्यवहारार्थाः शिष्या आभिः संव्यवहरेयुरिति पूर्वाचार्य्यसंज्ञानुकथनमस्मिन् शास्त्रे मङ्गलार्थं च पूर्वाचार्य्यशास्त्रकीर्त्यपरिणाशार्थं वा यद्वा यथा एते वर्णा नित्या एवमेता अपि संज्ञा नित्या एव एवं च ज्ञात्वा सर्वशास्त्रेष्वेता एव संज्ञा उपलभ्यन्ते द्वितीयचतुर्थाः सोष्माणः तथा ककारादीनां स्पर्शसंज्ञा तथा यकारादीनामन्तस्थसंज्ञा आभिः संज्ञाभिर्व्यवहरतां धर्मो भवति यद्वा नैव संज्ञा किन्तर्हि वर्णस्वरूपमनेन सूत्रेण कथ्यते ऊष्मा वायुः ऊष्मणा सह वर्त्तन्त इति सोष्माणः अतिशयार्थं वचनं महाप्राणा इत्यर्थः। अत एवैषां संयोगपीडने वायुर्निर्गच्छति तन्निवारयेत्। यथा। दघ्ना दकारो धकारप्रकृतिर्यमः नकार इति संयोगः अत्र धकारप्रकृतित्वात् यमस्य पीडने ऊष्मा निष्क्रामति तं सन्धारयेत् तदात्मकत्वात्तस्य वर्णस्याचार्य्योऽपि यमस्य स्फोटने दोषं वक्ष्यति ऊष्मभ्यः पञ्चमेषु यमापत्तिर्दोष इति, स्फोटनं च ककारवर्गे वा स्पर्शादिति ॥

## अमात्रस्वरो ह्रस्वः ॥ ५५ ॥

अकारमात्रस्वरो ह्रस्वसंज्ञो भवति तद्यथा अ इ उ ऋ ऌ संज्ञाकरणे प्रयोजनं वक्ष्यति अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धमात्रा पूर्वा चार्द्धमात्रेति ॥

## मात्रा च ॥ ५६ ॥

मात्रा च यत्र श्रूयते तत्र अकारकालः मात्रस्वरः प्रत्येतव्यः ह्रस्वो मात्रेति पर्य्यायावित्यर्थः ॥

द्विस्तावान् दीर्घः ॥ ५७ ॥

ह्रस्वात् द्विगुणकालो वर्णो दीर्घसंज्ञो भवति यथा आ ई ऊ ॠ ॡ ए ऐ ओ औ इति संज्ञाकरणे प्रयोजनं दीर्घादर्द्धमात्रा पूर्वा चाध्यर्द्धेति ॥

प्लुतस्त्रिः ॥ ५८ ॥

ह्रस्वत्रिगुणकालः प्लुतसंज्ञो भवतीति यथा आ३ ई३ ऊ३ ॠ३ ॡ३ ए३ ऐ३ ओ३ औ३ संज्ञाकरणे प्रयोजनं प्लुतमितावित्यादि ॥

व्यञ्जनमर्द्धमात्रा ॥ ५९ ॥

कादीनां व्यञ्जनसंज्ञा कृता व्यञ्जनं कादीति अधुना तस्यार्द्धमात्राकालतोच्यते यथा प्राङ् प्रत्यङ् ङकारावर्द्धमात्रौ ॥

तदर्द्धमणु ॥ ६० ॥

अर्द्धमात्रार्द्धमणुसंज्ञं भवति संज्ञाकरणे प्रयोजनम् मात्रार्द्धमात्राणुमात्रावर्णापत्तीनामिति ॥

परमाण्वर्द्धाणुमात्रा ॥ ६१ ॥

अर्द्धाणुमात्रा परमाणुसंज्ञं भवति ॥

स्थाने ॥ ६२ ॥

अधिकरणं वर्णानां स्थानशब्देनोच्यते यदित ऊर्ध्वमनुक्रमिष्यामः स्थाने इत्येवं तद्वेदितव्यम् अधिकारसूत्रमेतत् ॥

ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात् ॥ ६३ ॥

ह्रस्वस्य वर्णस्य ग्रहणे दीर्घप्लुतावपि वर्णौ गृहीतौ द्रष्टव्यौ परिभाषेयं स्थानाधिकारार्था ॥

प्रथमग्रहणे वर्गम् ॥ ६४ ॥

वर्गादौ प्रथमवर्णग्रहणे वर्गं जानीयात् परिभाषेयम् ॥

ऋ ᳵ कौ जिह्वामूले ॥ ६५ ॥

ऋॠॠ ३ इति त्रयः जिह्वामूलीयः कवर्ग इत्येते नव वर्णा जिह्वामूलस्थानाः ॥

इचशेयास्तालौ ॥ ६६ ॥

इईई ३ इति त्रयः चवर्गः शकार एकारो यकार इत्येते एकादशवर्णास्तालुस्थानाः ॥

षटौ मूर्द्धनि ॥ ६७ ॥

षकारटवर्ग इत्येते षड्वर्णा मूर्द्धन्या द्रष्टव्याः ॥

रो दन्तमूले ॥ ५८ ॥

रेफो दन्तमूलस्थानः प्रत्येतव्यः ॥

ऌलसिता दन्ते ॥ ६९ ॥

ऌॡॡ ३ एते त्रयः लकारः सकारस्तवर्ग इत्येते दशवर्णा दन्त्याः ॥

उवोपोपध्मा ओष्ठे ॥ ७० ॥

उऊऊ ३ एते त्रयः वकार ओकार उपध्मानीयः पवर्ग एते एकादशवर्णा ओष्ठ्याः ॥

अहविसर्जनीयाः कण्ठे ॥ ७१ ॥

अकारो मात्रिको द्विमात्रिकस्त्रिमात्रिक इत्येते त्रयः हकारविसर्जनीयौ इत्येते पञ्चवर्णाः कण्ठ्याः प्रत्येतव्याः ॥

सवर्णवच्च ॥ ७२ ॥

अहविसर्जनीयाः कण्ठे इति अकारस्य मात्रिकस्य द्विमा-

विकस्य त्रिमात्रिकस्य च कण्ठस्थानता उक्ता यथा कण्ठ्या मध्येनेति समानकरणता त्रयाणामपि आस्यप्रयत्नस्तु भिद्यते कोऽसावास्यप्रयत्नो नाम संवृतता विवृतता च अस्पृष्टता स्पृष्टता च ईषत्स्पृष्टता अर्द्धस्पृष्टता च इत्यास्यप्रयत्नः तद्यथा संवृतास्यप्रयत्नः अकारः विवृतास्यप्रयत्ना इतरे स्वराः यथा अस्पृष्टास्यप्रयत्नाः स्वराः स्पृष्टास्यप्रयत्नाः स्पर्शाः तथा ईषत्स्पृष्टास्यप्रयत्ना अन्तस्थाः अर्द्धस्पृष्टास्यप्रयत्ना ऊष्माणः अनुस्वारस्य अयमास्यप्रयत्नः शिक्षाविद्भिरुक्त इह गृह्यते अतोऽकारस्य मात्रिकस्य संवृतास्यप्रयत्नस्य इतरयोश्च विवृतास्यप्रयत्नयोर्द्विमात्रिकत्रिमात्रिकयोः सह सावर्ण्यं तुल्यं न सम्भवतीति तदर्थमिदमारभ्यते सवर्णवच्च कार्य्यं भवति सवर्णदीर्घत्वं भवतीत्यर्थः तद्यथा सोमऽ आभूयो भर, मात्वा अग्निः मात्वाग्निर्ध्वनयीत् एवमन्यत्रापि सवर्णवत्कार्य्यं द्रष्टव्यम् ॥

**ऐकारौकारयोः कण्ठ्या पूर्वा मात्रा ताल्वोष्ठयोरुत्तरा ॥ ७३ ॥**

ऐकारस्य औकारस्य च कण्ठ्या पूर्वामात्रा अकारमात्रा उभयोरपि पूर्वा उत्तरा प्रथमस्य तालुस्थाना उत्तरा पूर्वं एकार इत्यर्थः । तद्यथा अए ऐ इति द्वितीयस्योत्तरा ओष्ठस्थाना द्वितीयस्योत्तरा ओकार इत्यर्थः तद्यथा अओ औ इति । अत्र केचिदाहुः अकारस्यार्द्धमात्रा एकारस्याध्यर्द्धा ऐकारे अकारस्यार्द्धमात्रा ओकारस्याध्यर्द्धा औकारे इति तथा चोक्तम् अर्द्धमात्रा तु कण्ठस्य ऐकारौकारयोर्भवेत् इति । अनेनैव क्रमेण एकारौकारौ व्याख्यातौ ॥

**यमानुस्वारनासिक्यानां नासिके ॥ ७४ ॥**

चत्वारो यमाः अनुस्वारनासिक्यौ चेति षड्वर्णा नासिकास्थाना इति ॥

## मुखनासिकाकरणोऽनुनासिकः ॥ ७५ ॥

मुखसहितया नासिकया क्रियते इति मुखनासिकाकरणः मुखनासिकाकरणो वर्णोऽनुनासिकसंज्ञो भवति जातावेकवचनं स्वराणामयं वैकल्पिको धर्मः अन्तस्थानां रेफवर्जितानां च वाचनिकस्त्वायं धर्मः तद्यथा अनुनासिकमुपधा प्रागन्तस्थायाः यथा महाँ२॥ऽइन्द्रः उन्नयामि स्वाँ२॥ऽअहम् ये वा वनस्पतीँ१॥रनु अग्ने क्रत्वा क्रतूँ १। रनु अन्तस्थासु भवति वक्ष्यति अन्तस्थामन्तस्थास्वनुनासिकां परसस्थानाम् सँय्यौमि सँव्वपामि तँल्लोकम्पुण्यं प्रक्षेषमिति इत उत्तरं करणाधिकारो भविष्यति ॥

## दन्त्या जिह्वाग्रकरणाः ॥ ७६ ॥

दन्त्या जिह्वाग्रेण क्रियन्ते तद्यथा तथेति ॥

## रश्च ॥ ७७ ॥

रेफश्च जिह्वाग्रेण क्रियते अन्यस्थानोऽपि ॥

## मूर्द्धन्याः प्रतिवेष्ट्याग्रम् ॥ ७८ ॥

मूर्द्धन्याः षकारटवर्गौ एतौ प्रतिवेष्ट्य जिह्वाग्रेण क्रियन्ते।

## तालुस्थाना मध्येन ॥ ७९ ॥

तालुस्थाना इचशया एते जिह्वामध्येन क्रियन्ते ॥

## समानस्थानकरणा नासिक्यौष्ठ्याः ॥ ८० ॥

हुँकारो नासिक्यः स च नासिकास्थानः उवौ षोपध्मा ओष्ठ इत्योष्ठस्थानाः एतेषां यदेव स्थानं तदेवकरणम् ॥

## वो दन्ताग्रैः ॥ ८१ ॥

वकारस्तु ओष्ठयोऽपि दन्ताग्रैः क्रियते ॥

## नासिकामूलेन यमाः ॥ ८२ ॥

यमाश्चत्वारो नासिकामूलेन क्रियन्ते यथा यज्ञः याँश्च रुक्म इति ॥

## जिह्वामूलीयानुस्वारा हनुमूलेन ॥ ८३ ॥

जिह्वामूलस्थाना अनुस्वारश्च हनुमूलेन क्रियते यथा ऋक्सामयोः अठं॰शुना ते अठं॰शुः ॥

## कण्ठ्या मध्येन ॥ ८४ ॥

कण्ठ्या वर्णा मध्येन हन्वोरेव क्रियन्ते यथा अह इति ॥

## प्रथमोत्तमाः पदान्तीया अचञौ ॥८५॥

एवं तावदधस्तनेन वर्णानां स्थानानि करणानि चोक्तानि आस्यप्रयत्नस्तु शिक्षान्तराद् गृह्यते सवर्णसंज्ञाङ्गभूतत्वात् अधुना पदान्तीयवर्णनिरूपणायाह प्रथमोत्तमाः पदान्तीया भवन्ति चकारञकारौ वर्जयित्वा प्रथमा यथा प्राक् अपाक् विराट् सम्राट् यत् तत् त्रिष्टुप् अनुष्टुप् उत्तमा यथा प्राङ् प्रत्यङ् त्रीन् समुद्रान् तं यज्ञम् ॥

## विसर्जनीयः ॥ ८६ ॥

विसर्जनीयः पदान्तीयो भवति यथा अग्निः घर्मः ॥

## स्वराश्च ऌकारवर्जम् ॥ ८७ ॥

स्वराश्च पदान्तीया भवन्ति ऌकारं वर्जयित्वा यथा द्यौष्याय नौष्याय अश्विना मित्रावरुणा सुचि इन्द्राग्नी मधु अन वृषण्वसू चमू हे विरूपे पृथिव्यै भूम्यै इन्दो अश्विनौ, एतानि स्वरान्तान्युदाहरणानि ॥

णकारर्कारावत्र्ग्रहे ॥ ८८ ॥

प्रथमोत्तमाः पदान्तीया इत्यनेन णकारः पदान्तीयः प्राप्तः स्वरांश्च लृकारवर्जमित्यनेन ऋकारश्च पदान्तीयः प्राप्तः अतस्तावुभौ पदान्तीयावापद्येते अवग्रह एव स्थाप्येते यथा पूषण्वान् वृषण्वस्तु पितृसदनाः पितृसदनम् ॥

अनुनासिकाश्चोत्तमाः ॥ ८९ ॥

वर्गोत्तमाः ङञणनमा अनुनासिका भवन्ति। चकारात् स्वस्वस्थानाद्यपरित्यागद्वारेण नासिकास्थानं द्वितीयमेषामित्यर्थः। वर्णस्वरूपज्ञापनार्थमिदम्। संज्ञार्थमित्यपरे ॥

स्पर्शान्तस्य स्थानकरणविमोक्षः ॥ ९० ॥

स्पर्शान्तस्य पदस्य स्थानकरणविमोक्षः कर्त्तव्यः अन्येन प्रयत्नेनान्यत्पदमारब्धव्यम् अन्यथा पदादेर्द्वित्वं भवति तद्यथा तत् नः, तन्नो मित्रो वरुणः, सं यौमि, सँय्यौमीदमग्ने ॥

अवसाने च ॥ ९१ ॥

समासे च अर्द्धर्चादौ स्वरान्तानामपि पदानां स्थानकरणविमोक्षः कर्त्तव्यः यथा संमधुमतीर्मधुमतीभिः पृच्यन्ताम् शुक्रन्दुदुह्रेऽअह्नयः ॥

प्रगृह्यम् ॥ ९२ ॥

प्रगृह्यमित्ययमधिकारः। यदित ऊर्द्ध्वमनुक्रमिष्यामः प्रगृह्यमिति तद्वेदितव्यम् प्रगृह्यसंज्ञायाः प्रयोजनं प्रगृह्यः स्वरे इत्यादि ॥

एकारेकारोकारा द्विवचनान्ताः ॥ ९३ ॥

एकार ईकार ऊकार एते द्विवचनप्रतिपादकाः मन्त्राः

प्रगृह्यसंज्ञा भवन्ति यथा एकारान्तस्य भवति द्वे इति शीर्षे इति यथा ऊकारान्तस्य भवति अध्वर्यू इति बाहू इति ॥

ओकारस्य पदान्तेऽनवग्रहः ॥ ९४ ॥

ओकारस्य पदान्ते वर्त्तमानोऽवग्रहवर्जितः प्रगृह्यसंज्ञो भवति यथा अर्द्धर्योऽअद्रिभिः चित्रभानो इति इन्द्रायाहि चित्रभानो सुताः अनवग्रह इति किम् गोव्यच्छमिति गो। व्यच्छम्। गोघातमिति गो। घातम् ॥

उकारोऽपृक्तः ॥ ९५ ॥

उकारोऽपृक्तः प्रगृह्यसंज्ञो भवति। उकारोऽपृक्तो दीर्घमनुनासिकमिति वक्ष्यति एतेनेत्थं रूपं भवति यथा ऊँ मन्वं-तवाउ नवा उऽएतत् अपृक्त इति किम् नु इन्द्र योजान्न्वि-न्द्रते ॥

चमू अस्मे त्वे ॥ ९६ ॥

चमू अस्मे त्वे एतानि पदानि प्रगृह्यसंज्ञकानि भवन्ति यथा चमू इति चमू सोममिन्द्रचमूसुतम् अस्मे इत्यस्मे इन्द्रोऽअस्मेऽआरात् त्वे इति त्वे बन्धुस्त्वे रायः ॥

मे उदात्तम् ॥ ९७ ॥

मे इत्येतत्पदमुदात्तं चेत्प्रगृह्यसंज्ञं भवति यथा मे इति मे, मे रायो मा व्ययम् उदात्त इति किं इममे वरुण ॥

अमी पदम् ॥ ९८ ॥

अमी इत्येतत्पदं चेत्प्रगृह्यसंज्ञं भवति यथा अमी इत्यमी एष वोऽमी राजा, ये वामी रोचने दिवः, पदमिति किम् पदावयवस्य माभूत् अमीवाच्चित्तम् ॥

स्वरोऽक्षरम् ॥ ९९ ॥

स्वरोऽक्षरसंज्ञो भवति यथा अइति इइति अक्षरसंज्ञायाः प्रयोजनम् प्रागुवर्णादक्षराणामेकीभाव इति वक्ष्यति। तथा चोक्तम्, सव्यञ्जनः सानुस्वारः शुद्धो वापि स्वरोऽक्षरमिति॥

सहाद्यैर्व्यञ्जनैः॥ १००॥

आद्यैर्व्यञ्जनैः सहितः स्वरोऽक्षरं प्रत्येतव्यम् यथा मो ओकारसहितोऽक्षरं प्रत्येतव्यम् यथा द्रुग्घ्वः द्रुग्घ्वः चकारो टकाररेफसहितोऽक्षरम्॥

उत्तरैश्चावसितैः॥ १०१॥

आद्यैर्व्यञ्जनैः उत्तरैश्चावसानगतैः सहितः स्वरोऽक्षरं यथा वाक् वकारककारसहित आकारोऽक्षरम् प्राङ् पकाररेफङ-कारसहित आकारोऽक्षरम् एवन्तावद्द्येकः स्वरो भवति तद-धस्तनान्युपरितनानि च व्यञ्जनानि तदङ्गानि भवन्तीत्ये-तत्प्रतिपादितम्, अधुना स्वरयोर्मध्ये द्विप्रभृतीनां व्यञ्जनाना-मङ्गत्वनिरूपणायाह॥

सँय्योगादिः पूर्वस्य॥ १०२॥

सँय्योगादिभूतो वर्णः पूर्वस्य स्वरस्याङ्गं भवति यथा अश्श्वः द्वौ शकारौ वकारस्य सँय्योगः तत्र सँय्योगादिः पूर्वस्येति कृत्वा पूर्वः शकारः पूर्वस्य स्वरस्याङ्गम् उत्तरशकारवकारावुत्तरस्य स्वरस्याङ्गम् यथा हव्व्यम् द्वौ वकारौ यकारस्य सँय्योगः तत्रैको वकारः सँय्योगादिः पूर्वस्येति कृत्वा पूर्वस्याङ्गम् वकारयकारा-वुत्तरस्य॥

यमश्च॥ १०३॥

यमैः पूर्वस्याङ्गं भवति चशब्दात् पूर्ववर्णसहितः यथा रुक्-क्मम् ककारद्वययममकाराः सँय्योगः तत्र ककारयमौ पूर्वस्य मकार उत्तरस्य।

## क्रमजश्च ॥ १०४ ॥

क्रमाज्जातं क्रमजम् यत्संयोगादेः परस्य वर्णस्य द्विरुक्त्या जायते तत् क्रमजमित्युच्यते यथा पार्श्व्यम् रेफो द्वौ शकारौ वकारो यकारश्च संयोगः तत्र रेफः संयोगादिः क्रमजश्च प्रथमः शकारः पूर्वाङ्गम्, द्वितीयः शकारो वकारो यकारश्चोत्तराङ्गम् वर्ष्ष्याय रेफो द्वौ षकारौ यकारश्च संयोगः तत्र रेफः संयोगादिः पूर्वषकारः क्रमज एतौ पूर्वाङ्गम् अपरः षकारो यकारश्चोत्तराङ्गम् ॥

## तस्माच्चोत्तरꣳ स्पर्शे ॥ १०५ ॥

तस्मात् क्रमजाद्यदुत्तरं व्यञ्जनं तत्पूर्वाङ्गं भवति स्पर्शे परभूते यथा पार्ण्ग्या रेफषकारौ द्वौ णकारौ यकारश्च संयोगः तत्र रेफः संयोगादिरिति कृत्वा षकारः क्रमजमिति कृत्वा तस्माच्चोत्तरꣳ स्पर्शे इति कृत्वा पूर्वणकारश्च एते पूर्वाङ्गम्, द्वितीयणकारो यकारश्चोत्तरस्य स्वरस्याङ्गम् ॥

## अवसितं च ॥ १०६ ॥

अवसानगतं पूर्वाङ्गं भवति यथा वाक् ककारोऽवसितः, ऊर्क् अत्र रेफककारयोः संयोगः रेफः संयोगादिः ककारोऽवसितः एतौ पूर्वस्य स्वरस्याङ्गम्, पूर्वाङ्गपराङ्गचिन्तायाः प्रयोजनमात्र ॥

## व्यञ्जनꣳ स्वरेण सस्वरम् ॥ १०७ ॥

व्यञ्जनं यद्यस्य स्वरस्याङ्गं तत्तेनैव स्वरेण समानस्वरम्भवति अधस्तनान्येवोदाहरणानि तथा चोक्तम् स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च) स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरमिति अथ शिक्षा विहिता इत्युपक्रम्य उरःकण्ठभ्रूम-

ष्यानि प्रातःसवनमाध्यन्दिनतृतीयसवनेषु यथाक्रमं स्थानानि भवन्तीति प्रतिपादितम् तत एकैकस्मिन् स्थाने वर्णेषु उच्चार्य्यमाणेषु त्रयो विकाराः शरीरस्य भवन्ति पर्य्यायेण ते प्रतिपादिता एव आयाममार्दवाभिघाता इत्यनेन सूत्रेण, अधुना तेषु शरीरविकारेषु सत्सु ये स्वरा निष्पद्यन्ते तन्निरूपणायाह॥

## उच्चैरुदात्तः॥ १०८॥

आयामेनोर्द्ध्वगमनेन गात्राणां यः स्वरो निष्पद्यते स उदात्तसंज्ञो भवति यथा (८अ० १० कण्डिका) अग्ना३इ (२२अ० ७ क०) लाजी३न् उदात्तवानुदात्त इत्येवमादयः॥

## नीचैरनुदात्तः॥ १०९ ॥

नीचैर्मार्दवेणाधोगमनेन गात्राणां यः स्वरो निष्पद्यते सोऽनुदात्तसंज्ञो भवति (२१ अ० ६१ क०) यथा आषे॑यऽक्रृषीणाम् अनुदात्तप्रदेशाः उदात्तानुदात्तठ० स्वरितमित्येवमादयः॥

## उभयवान्त्स्वरितः॥ ११० ॥

उदात्तस्योर्द्ध्वगमनं गात्राणां प्रयत्न अनुदात्तस्याधोगमनं गात्राणां प्रयत्न आभ्यां प्रयत्नाभ्यां समाहारीभूताभ्यां यः स्वर उच्चार्य्यते स स्वरितसंज्ञो भवति यथा (१अ० २० क०) धान्यमसि (१अ० १२क०) वैष्णव्यौ स्थः॥

## एकपदे नीचपूर्वः सयवो जात्यः॥ १११॥

एकस्मिन् पदे नीचपूर्वोऽनुदात्तपूर्वो यकारेण वकारेण सहितो जात्यः स्वरः प्रत्येतव्यः नीचपूर्व इति सम्भवविशेषणम्। अपूर्वोऽपि भवति नीचपूर्वो यथा (१७अ० ८७क०)

कन्या इव (१अ० २०क०) धाम्यमसि । अपूर्वो (१८अ० ६४क०) यथा स्वर्द्दैवेषु ॥

## उदात्तादयः परे सप्त ॥ ११२ ॥

उदात्तादयः परे सप्त स्वराः प्रत्येतव्या यथा अभिनिहित, क्षैप्र, प्रश्लिष्ट, तैरोव्यञ्जन, तैरोविराम, पादवृत्त, ताथाभाव्याः ॥

## त्रयो नीचस्वरपराः ॥ ११३ ॥

त्रयो नीचस्वरपरा ज्ञेयाः अभिनिहित, क्षैप्र, प्रश्लिष्टाः ॥

## एदोद्भ्यामकारो लुगभिनिहितः ॥११४॥

एकारौकाराभ्यामुदात्ताभ्यामकारोऽनुदात्तो यत्र लुक् लुप्यते तत्राभिनिहितः स्वरो भवति यथा एकारस्य भवति, (२४अ० ३७क०) ते अप्सरसाम् तेऽप्सरसाम्, (१८अ० ५८क०) ते अवन्तु तेवन्त्वस्मान् ओकारस्य भवति यथा (२अ० २१क०) वेदः असि वेदोसि, (५अ० ३१क०) तुथः असि तुथोऽसि ॥

## युवर्णौ यवौ क्षैप्रः ॥ ११५ ॥

इश्च उश्च यू युवर्णौ उदात्तावनुदात्तस्वरोदयौ यकारवकाराभ्यां यथासंख्येन युक्तौ यदा तदा क्षैप्रसंज्ञः स्वरो भवति इवर्णस्य यथा (३ अ० ६० क०) त्रि अम्बकम् त्र्यम्बकं यजामहे, (११ अ० ४४ क०) वाजी अर्वन् आशुर्भव वाज्यर्वन् उवर्णस्य यथा (३ अ० ५१ क०) नु इन्द्र योजान्विन्द्र ते हरी, (११ अ० ७० क०) द्रु अन्नः द्र्वन्नः सर्पिः ॥

## इवर्ण उभयतो ह्रस्वः प्रश्लिष्टः ॥ ११६ ॥

पूर्वो ह्रस्व इकार उदात्तः परश्च ह्रस्व इकारोऽनुदात्तस्तयोः परस्परप्रश्लिष्टे प्रश्लिष्टः स्वरो भवति यथा (११ अ० ६१ क०)

अभि इन्धताम् अभीन्धताम्, (२० अ० ७० क०) स्रुचि इव स्रुचीव घृतम् ॥

**स्वरो व्यञ्जनयुतस्तैरो व्यञ्जनः ॥ ११७ ॥**

उदात्तात् पूर्वस्मात् परो यः स्वरो व्यञ्जनयुतः स तैरो व्यञ्जनसंज्ञकः स्वरो भवति यथा (८ अ० ४३ क०) इडे रन्ते हव्ये काम्ये ॥

**उदवग्रहस्तैरो विरामः ॥ ११८ ॥**

उदात्तावग्रहस्तैरो विरामसंज्ञकः स्वरो भवति अयं च समस्तपदेषु भवति अवग्रहवचनात् अवग्रहाभावे तु तैरो व्यञ्जन एव यथा (१ अ० १ क०) गोपताविति गो। पतौ यज्ञपतिमिति यज्ञपतिम् ॥

**विवृत्तिलक्षणः पादवृत्तः ॥ ११९ ॥**

स्वरयोरन्तरयोरन्तरं विवृत्तिरुच्यते तया लक्ष्यत इति विवृत्तिलक्षणः स पादवृत्तसंज्ञः स्वरो भवति विवृत्त्या व्यवहित इत्यर्थः। यथा (२ अ० ६ क०) ध्रुवाऽअसदन्नृतस्य (२३ अ० ५५ क०) का ईम् काऽइमरे पिशङ्गिला ॥

**उदाद्यन्तोन्यवग्रहस्ताथाभाव्यः ॥ १२० ॥**

उदात्तादिरुदात्तान्तो नीचावग्रहस्ताथाभाव्यसंज्ञः स्वरो भवति यथा (५ अ० ५ क०) तनूनप्त्रऽइति तनू। नप्त्रे (२१ अ० १० क०) तनूनपादिति तनू। नपात् अयं तु स्वरितानां मध्ये पठ्यते नत्विह माध्यन्दिनानां स्वरित उपलभ्यते उदात्तानुदात्तौ तु पृथग्भूतावुपलभ्येते स्वरितश्चोदात्तानुदात्तयोरेकीभावे सति तस्मिँश्च तिर्य्यग्गमनं गात्राणां भवति न च तदिह किञ्चिदुपलभ्यते अतो माध्यन्दिनानां पदकाले

ताथाभाव्यसंज्ञकः कम्पो भवति तथा चोक्तमौज्जिहायनकैर्माध्यन्दिनमतानुसारिभिः। अवग्रहो यदा नीच उच्चयोर्मध्यतः क्वचित्। तथाभाव्यो भवेत् कम्पस्तनूनप्त्रे निदर्शनम् यस्तु ताथाभाव्यस्य स्वरितानां मध्ये पाठः अयमन्येषामाचार्य्याणां मतेन तेषां हि मतेन तनूशब्दः संहितावद्भवति अतोऽसौ स्वरितो भवति तदभिप्रायेण स्वरितानां मध्ये पाठः अयमपि चोपरिष्टाद्वक्ष्यति, निहितमुदात्तस्वरितपरमनवग्रहे, स्वरितस्य चोत्तरो देशः प्रणिहन्यत इति तदभिप्रायेण वक्ष्यति, एवमुदात्तानुदात्तस्वरितलक्षणविधानानन्तरं हस्तलक्षणमाह॥

हस्तेन ते॥ १२१॥

अनेन प्रकारेण हस्तेन ते स्वराः प्रदृश्यन्ते तत्रोदात्ते ऊर्द्ध्वगमनं हस्तस्य अनुदात्तेऽधोगमनं हस्तस्य एतत्सर्वेषामाचार्य्याणां मतेन स्थितं, स्वरिते तु विप्रतिपद्यन्ते तत्प्रकाशनार्थमिदमाह॥

चत्वार स्तिर्य्यक्स्वरिताः॥ १२२॥

जात्याभिनिहितक्षैप्रप्रश्लिष्टा एते चत्वारस्तिर्य्यग्घस्तं कृत्वा स्वरणीयाः पिष्टदानवद्धस्तं कृत्वेत्यर्थः॥

अनुदात्तं चेत्पूर्वं तिर्य्यङ् निहत्य काण्वस्य॥ १२३॥

एतेषां चतुर्णां जात्यादीनां यद्यनुदात्तं पूर्वं भवति तदा तिर्य्यग्घस्तं कृत्वा स्वरयितव्याः काण्वाचार्य्यस्य मतेन उदात्तपूर्वं अपूर्वं च न भवति अनुदात्तपूर्वो यथा (१अ० १२क०) वैष्णव्यौ (१अ० २०क०) धान्यमसि (५अ० ३१क०) स्तुपोसि (२अ० २१क०) वेदोसि (१७अ० १८क०) अभ्यर्षत (३अ० ५१क०)

ग्रीज्राग्निन्द्र ते (११अ० ६१क०) अभीन्धतामुखे (२०अ० ७८क०) स्रुचीव घृतम् एतेषु तिर्य्यग्वस्तः क्रियते उदात्तपूर्वेष्वपूर्वेषु च जात्यादिषु तैरो व्यञ्जनवद्वस्तः क्रियते उदात्तपूर्वो भवति यथा (१४अ० २३क०) पुञ्चदशो व्यो॑म (३१अ० १०क०) कतिधा व्य॑कल्पयन् अपूर्वो भवति (३अ० ६०क०) यथा त्र्यम्बकम् (११अ० ७०क०) द्व॑न्नः सुर्पिरासुतिः॥

## ऋजुन्निहत्य प्रणिहन्यते उदात्ते ॥१२४॥

ऋजुन्निहत्य हस्तमनुदात्तवत् ततः प्रकर्षेण निहन्यते नीचीक्रियते जात्याभिनिहितक्षैप्रप्रश्लिष्टा उदात्ते परभूते यथा (३अ० ५क०) भूर्भुवः स्वर्द्यौरिव (१अ० १०क०) देवस्य॑ त्वा सवितुः प्र॑सुवे॒ऽश्विनो॑र्बाहुभ्याम् (१७अ० १६क०) यासद्विश्व॑श्चर्षणि॑म् (२०अ० ६८क०) स्रुचीवेति॑ उदात्त इति कस्मात् (१अ० २०) धान्यमसि धिनुहि देवान् (१अ० १२क०) पवित्रे॑ स्थो वैष्णव्यौ॥

## तीव्रोऽभिनिहितः परम्परम्मृदुस्त्वन्यः ॥१२५॥

तीव्र उच्चारणतो हस्तेन चाभिनिहितः स्वरो भवति ततोऽन्यो मृदुप्रयत्नो भवति किमविशेषेणेत्याह परम्परम् शब्दोऽव्ययम् पूर्वमपेक्ष्य परः परमपेक्ष्य पर इत्येवम् यथा अभिनिहितमपेक्ष्य क्षैप्रः क्षैप्रमपेक्ष्य प्रश्लिष्टः क्षैप्रे जात्यस्यान्तर्भावो द्रष्टव्यः तथा चोक्तम् सर्वतीव्रोऽभिनिहितः प्रश्लिष्टस्तदनन्तरम्। ततो मृदुतरौ स्वारौ जात्यक्षैप्रावुभौ स्मृतौ १ ततो मृदुतरः स्वारस्तैरो व्यञ्जन उच्यते। पादवृत्तो मृदुतमस्त्वेतत् स्वारबलाबलमिति २॥

## तस्यादित उदात्तꣳ स्वरार्द्धमात्रम् ॥१२६॥

स्वरितस्य स्वरस्यादावुदात्तं ज्ञातव्यं तच्च स्वरार्द्धमात्रा-

कालम् यद्येकमात्रो यदि द्विमात्रो यदि त्रिमात्रः स्वरस्तथाप्यर्द्धमुदात्तं परमनुदात्तं अयं तु स्वरिते उदात्तानुदात्तप्रविभागो द्रष्टव्यः स्वरितशब्दे नोदात्तानुदात्तं निर्वर्त्य पृथक् श्रुतिस्वरान्तरमभिधीयते यथा त्रपुताम्रयोः सँय्योगे धात्वन्तरस्य कांस्यस्योत्पत्तिः यथा च गुडदध्नोरेकीभावे मार्जिकोत्पत्तिः एवमुदात्तानुदात्तसंयोगे स्वरितोत्पत्तिः ॥

## सप्त ॥ १२७ ॥

सामसु सप्तस्वरानाहुः षड्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादान् ननु यजुर्वेदलक्षणप्रक्रमे एवं उदात्तानुदात्तसँय्योगे स्वरितोत्पत्तौ कः सामलक्षणप्रसङ्ग उच्यते अग्नौ यजुर्वेदे अध्वर्य्योः सामगानं विहितम्। नान्योऽध्वर्य्योर्गायेदिष्टका वा एता त्रिहितचितो ह्स्याद्यदन्योऽध्वर्य्योर्गायेत् इति ब्रा॰ २। शातपथे ८ सञ्चितिकाण्डे, अतोऽध्वर्य्युकर्त्तृकमिति कृत्वा कश्चिल्लक्षणांशः कृतः सामसु, अपरे त्वाहुः जात्याभिनिहितक्षैप्रप्रश्लिष्टतैरोव्यञ्जनतैरोविरामपादवृत्ताः सप्तस्वरा अत्रावधार्य्यन्ते ताथाभाव्यस्तु वाजसनेयिनां निवार्य्यते ॥

## त्रीन् ॥ १२८ ॥

उदात्तानुदात्तस्वरितान् यजुर्वेदे त्रीन् स्वरानाहुः, तथा च उक्ता एव सन्तोऽनूद्यन्ते एवेदानीमपवादार्थम् ॥

## द्वौ ॥ १२९ ॥

किमविशेषेण यजुर्वेदे त्रीन् स्वरानाहुः नेत्युच्यते द्वौ स्वरावुदात्तानुदात्तौ भाषितलक्षितौ शतपथब्राह्मणे आहुः पारिशेष्यान्मन्त्रेषु त्रैस्वर्य्यम् ॥

एकम् ॥ १३० ॥

तानंलक्षणमेकं स्वरमाहुर्यज्ञकर्मणि ॥

सामजपन्यूँखवर्जम् ॥ १३१ ॥

प्रगीतं मन्त्रवाक्यं सामशब्देनोच्यते विश्वे देवाः शृणुतेति जपः, न्यूँखो बह्वृचि प्रसिद्धः एतानि वर्जयित्वा यज्ञकर्मण्येकः स्वरो भवति तानलक्षणः ॥

प्रावचनो वा यजुषि ॥ १३२ ॥

प्रवचनशब्देनार्षपाठ उच्यते तत्र भवः स्वरः प्रावचनः स च यजुषि भवति वा तान इति विकल्पः स च त्रैस्वर्य्यलक्षण एव भवति प्रगृह्यं चर्चायामितिना पदेष्वित्यनेनैकस्मात् पर आर्षे इति ॥

तमितिविकारः ॥ १३३ ॥

तमित्युत्सृष्टसर्वनामका द्वितीया विभक्तिर्गृह्यते द्वितीयया यो निर्दिश्यते स विकारः प्रत्येतव्यः । यथा अनुस्वारं० गोष्मसु मकार इति मकारोऽनुस्वारविकारमापद्यते भाविभ्यः स षं० समानपद इति सकारः षकारविकारमापद्यते ॥

तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ १३४ ॥

तस्मिन्निति सप्तम्यन्तं परिगृह्यते सप्तम्या निर्दिष्टे पूर्वस्य कार्य्यं वेदितव्यम् पूर्वस्य पदान्तस्य विधिः प्रत्येतव्यः यथा ककारपकारयोः सकारमिति तथयोः समिति ॥

तस्मादित्युत्तरस्यादेः ॥ १३५ ॥

तस्मादिति पञ्चमी निर्दिष्टात्परस्य कार्य्यं वेदितव्यम् यथा उकारात्तु, परेः सिञ्चतेः ॥

षष्ठीस्थाने योगा ॥ १३६ ॥

षष्ठी विभक्तिस्थाने योगिनी वेदितव्या षष्ठ्यन्तस्य कार्य्यं भवतीत्यर्थः यथा यवयोः पदान्तयोः स्वरमध्ये लोपः ऐकारौकारयोः कण्ठ्यापूर्वामात्रा तात्वोष्ठयोरुत्तरा इति॥

## तेनेत्यागमः॥ १३७॥

तेनेति तृतीयाग्रहणम् तृतीयया यो निर्दिश्यते स आगमः प्रत्येतव्यः यथा ङ्नौ त्ताभ्यां सकार इति प्रगृह्यं चर्चायामितिना पदेषु॥

## अन्तरेण पर्वणी॥ १३८॥

पर्वशब्देन पदमुच्यते पदयोर्मध्ये आगमो भवति यथा प्राङ्सोमः (१०अ० ३१क०) प्राङ्क्सोमः प्रत्यङ्सोमः (१८अ० ३क०) प्रत्यङ्क्सोमः त्रीन् समुद्रान् (१३अ० ३ क०) त्रीन्त्समुद्रान् अस्मान् सीते (१२अ० ७०क०) अस्मान्त्सीते॥

## पर एकस्मात्॥ १३९॥

एकस्य पदस्य मध्ये य आगमो विधीयते स परो भवति यथा (१७अ० १३क०) द्वे इति शीर्षे इति प्रगृह्यं चर्चायामितिना पदेष्वित्यनेनैकस्मात् पदात् पर इतिकार आगमो विधीयते इति॥

## उभयोर्विकारः॥ १४०॥

द्वितीयया निर्दिष्टो विकार इत्यधस्तादुक्तम्। स उभयोर्भवति अन्तरेण पर्वणी च पदान्तपदाद्योरित्यर्थः एकस्य वा वर्णस्य निर्दिश्यते यथा आ इदम् (४अ० १क०) एदम् इह ऊर्जम् (१८अ० ६३क०) इहोर्जन्दधातन एकवर्णस्य भवति यथा मो षु नः (३अ० ४६क०) 'मोषूणऽइन्द्रात्र' सुसाव (१८अ० २क०) सुषाव सोमम्॥

## वर्णस्यादर्शनं लोपः ॥ १४१ ॥

दृशिरुपलब्धिवचनः। अनुपलब्धिरदर्शनं वर्णस्य लोप इत्युच्यते वक्ष्यति "लोपं धी" यथा अयुक्ष्मा॑ः मा (४अ० १२क०) अयुक्ष्मामा वंस्तेन॑ः, मत्या॑ः न॑ः (२अ० १०क०) मत्या नः-सन्त्वा॒शिषः॑ ॥

## विकारी यथासन्नम् ॥ १४२ ॥

विकारोऽस्यास्तीति विकारी विकारी वर्णोऽवचने यथासन्नम् यो य आसन्नस्तमापद्यते वक्ष्यति स्वरे भाव्यन्तस्थाम् यथा त्रि अम्बकम् त्र्यम्बकम् द्रुअन्नः द्र्वन्नः वचनादन्यदपि भवति यथा अनमो वाही सकारो डकारमिति अनड्वान् वचनात् सकारस्य डकारः। परिभाषासूत्रमेतत् ॥

## सङ्ख्यातानामनूदेशो यथासङ्ख्यम् ॥ १४३ ॥

समानसंख्यानां यः पश्चादुद्देशः स यथासंख्यम् भवति यस्य या संख्या प्रथमस्य प्रथमः द्वितीयस्य द्वितीयः तृतीयस्य तृतीय इत्यर्थः। वक्ष्यति सदो द्यौर्नमस्कृतं पिता पथेषु यथा (१८अ० १८क०) सदः कृतम् सदस्कृतम् (१३अ० ६क०) तेभ्यः सर्पेभ्यो नमः (२अ० ११क०) "द्यौः पिता" द्यौष्पितोपमाम् (१८अ० ५१क०) नमः पथे, शर्म सप्रथा नमस्पथे परिभाषासूत्रमेतत् ॥

## सन्निकृष्टविप्रकृष्टयोः सन्निकृष्टस्य ॥ १४४ ॥

यत्रोदाहरणसंशयः तत्रेयं परिभाषोच्यते सन्निकृष्टविप्रकृष्टयोरुदाहरणयोः सन्निकृष्टस्यैवोदाहरणस्य कार्य्यं प्रत्येतव्यम् न तु विप्रकृष्टस्य यथा असि शिवा सुषदेत्येवमादिषु परभूतेषु असि शब्द आद्युदात्त उक्तः तत्र सन्देहः किं सुक्ष्मा चासि शिवा चासि स्योना चासि सुषदेत्यत्रासि शब्द आद्यु-

दात्तो भवति उत स्योना चासि सुषदेति उभयोरप्यसि शब्दः परभूतः तत्रानेनावधारणं क्रियते यत्रान्यत्रापि सन्निकृष्टानि पदानि भवन्ति तत्र कार्य्यं भवति तद्यथा असि शिवा सुषदा पयस्वतीत्यत्र परस्वतीसन्निधानात् सुक्ष्मा चासि शिवा चासि स्योना चासि सुषदेत्ययमेवाद्युदात्तो भवति न तु स्योनासुषदेति विप्रकृष्टत्वात् ॥

## पूर्वोत्तरयोरुत्तरस्य ॥ १४५ ॥

यत्र पूर्वस्योत्तरस्य च युगपत्कार्य्यं प्राप्नोति तत्रोत्तरस्यैव भवति न तु पूर्वस्य सृग्यमुदाहरणम् (२१अ० ६१क०) आ च शासस्वा च अत्र स्वरिताकार उदात्तः तत्र युगपत्कार्य्यमुभयोः सन्धावुदात्त एव स्वरविषयकं चैतत् सूत्रम् ॥

## द्विरुक्तमाम्रेडितं पदम् ॥ १४६ ॥

द्विरभ्यस्तं पदमाम्रेडितसंज्ञं भवति यथा (२७अ० ४२क०) यज्ञायज्ञावोऽअग्नये, तत्र आम्रेडितसंज्ञायाः प्रयोजनम् आम्रेडितं चोत्तरमित्यादि ॥

## सꣳहितꣳ स्थितोपस्थितम् ॥ १४७ ॥

इत उत्तरं पदसंहिता वर्त्तिष्यते द्विरुक्तमित्यनुवर्त्तते। द्विरुक्तं यत्पदमिति करणेन मध्यस्थितेन आद्यन्तसंहितेन पूर्वमादिसंहितमुत्तरपदमन्तसंहितं स्थितोपस्थितसंज्ञं भवति यथा (१७अ० ८३क०) द्वे, इति द्वे, (१७अ० ८३क०) शीर्षे इति शीर्षे, (४अ० १५क०) पुनरिति पुनः। (१अ० ८क०) वह्नितममिति वह्नि। तमम्। (१अ० ८क०) सस्नितममिति सस्नि। तमम्। (१अ० ८क०) पप्रितममितिपप्रि। तमम्। तथा चोक्तम्। उपस्थितं सेतिकारं केवलं तु पदं स्थितम्। तत्स्थितोपस्थितन्नाम यत्रोभे आह संहिते। १। अस्यार्थः। इतिकर-

णसहितमुपस्थितसंज्ञं पदं भवति। केवलमितिकरणसहितं स्थितसंज्ञं भवति यत्र पदान्तपदादौ इतिकरणेन संहितौ आह। तत्स्थितोपस्थितपदमुच्यते। स्थितोपस्थितप्रदेशाः। पूर्वोत्तरसंहितस्य स्थितोपस्थितमवग्रहस्येति स्थितोपस्थितस्यैव सावग्रहस्य स्वरविशेषविधानार्थमाह॥

## सꣳहितावदवग्रहः स्वरविधौ परं च सर्वं चेदनुदात्तम्॥ १४८॥

अवग्रहशब्देन सावग्रहस्य पदस्य पूर्वपदमभिधीयते। अवग्रहः स्वरविधौ स्वरचिन्तायां संहितावत्स्वरं लभते। इतिकरणेन सह सन्धौ तस्मिंश्च सावग्रहे पदे द्वे भवतः तत्र पूर्वपदं तावदितिकरणेन सह सन्धौ संहितावत्स्वरं लभते। परं च अवग्रहात् परं पदं संहितावत्स्वरं लभते। यदि तत्सर्वमनुदात्तं भवति। यदि स्वतन्त्रं किञ्चिदक्षरमुदात्तं वा स्वरितं वा भवति। तदा स्वकीयया प्रकृत्या भवति। यथा वाङ्कृतमिमिति वाङ्क। ततम्। गृहपतऽइति गृह। पते। प्रजावतीरिति प्रजा। वतीः। परं च सर्वञ्चेदनुदात्तमिति कस्मात् ऊर्णाम्रदेत्यूर्णा। म्रदा। विरुक्चुरिति वि। रुक्चुः। द्रोणकलशऽइति द्रोण। कलशः। उदात्तोदाहरणम्, राजस्वऽइति राज। स्वः। स्वरितपदोदाहरणम्, स्वरविधाविति किम्। वर्णविधौ संहितावन्न भवति। महद्भ्यऽइति महत्। भ्यः। तिष्ठद्भ्यऽइति तिष्ठत्। भ्यः। (१६अ० २३क०) धावद्भ्यऽइति धावत्। भ्यः॥

## इति परस्तिर्य्यङ्नीचोऽन्तोदात्ते मध्योदात्ते पर्वणि काण्वस्य वा॥ १४९॥

इति परस्तिर्य्यङ्नीचो भवति अनुदात्तो भवतीत्यर्थः।

अन्तोदात्ते मध्योदात्ते वा पदे वा शब्दो भिन्नक्रमो विकल्पार्थः । काण्वस्याचार्य्यस्य मतेन । (१८अ० ७८क०) ऊर्णा-सूत्रेणेत्यूर्णा । मूत्रेण, (१८अ० २५क०) द्रोणकलशऽइति द्रोण । कलशः ॥

## उदात्तमयोऽन्यत्र नीच एव ॥ १५० ॥

काण्वस्येति वर्त्तते अन्तोदात्तमध्योदात्तयोः पर्वणोरन्यत्र इति करणात्परो नीच उदात्तमय एव भवति । प्रचित एव भवतीत्यर्थः । यथा । (१२अ० २०क०) सोमंगोपा इति सोमं । गोपाः । (१अ० ७क०) सप्नितममिति सप्नि । तमम् । पप्रि-तममिति पप्रि । तमम् ॥

## एकवर्णः पदमपृक्तम् ॥ १५१ ॥

एकवर्णस्यापृक्तसंज्ञा विधीयते पदस्य यथा (१अ० १क०) आ (७अ० ४१क०) उ अपृक्तसंज्ञायाः प्रयोजनम् । अपृक्त-मध्यानि त्रीणि स त्रिक्रमः ॥

## स एवादिरन्तश्च ॥ १५२ ॥

स एवैको वर्णः पदसंज्ञः सन् पदादिसम्बन्धीनि पदान्त-सम्बन्धीनि च कार्य्याणि लभते । यथा । (३३अ० २५क०) इन्द्रं आ इहि । इन्द्रे हि ॥

## अवग्रहः पदान्तवत् ॥ १५३ ॥

अवग्रहशब्देन पूर्वपदमिहाभिधीयते । अवग्रहः पदान्त-सम्बन्धीनि कार्य्याणि लभते वर्णविधौ, स्वरविधौ तु अधस्ता-दुक्तम् संहितावदवग्रहः स्वरविधाविति, यथा (१३अ० ५०क०) भरद्वाजऽइति भरत् । वाजः । (१६अ० २३क०) तिष्ठद्भ्यऽइति तिष्ठत । भ्यः ॥

## न त्विति करणम् ॥ १५४ ॥

अवग्रहः पदान्तवदित्युपदेशादितिकरणमपि प्राप्नोति तन्निषिध्यते । यथा । (१३अ० २३क०) अन्तुःश्लेषऽइत्यन्तःश्लेषः)। रिफितं च संहितायामनिरुक्तमित्यनेनेतिकरणमपि प्राप्नोति तन्निषिध्यते ॥

## पूर्वेणोत्तरः सꣳहितः ॥ १५५ ॥

इत उत्तरं संहितोच्यते पूर्वेण पदान्तेन उत्तरः पदादिः संहिता यदा क्रियते स्वरतो वर्णतश्च तदा द्विपदसंहितोच्यते यथा (१अ० १क०) इषे त्वा, त्वोर्जे क्रमसंहितेयम् ॥

## पदविच्छेदोऽसꣳहितः ॥ १५६ ॥

पदे पदे विच्छेदः पदविच्छेदः। पदविच्छेदो यदा क्रियते तदा असंहितः पाठः। यथा (१अ० १क ) इषे त्वा ऊर्जे त्वा ॥

## एकपदद्विपदत्रिपदचतुष्पदानेकपदाः पादाः ॥ १५७ ॥

एकं पदं यस्मिन् पादे स एकपदः पादः सा च पदसंहितोच्यते। छन्दसः पादपरिज्ञानार्थम्। एक पदः पादो यथा। (१५अ० ४४क०) हृदिस्पृशम्। द्विपदः पादो यथा। (१५अ० ४५क०) क्रतोः भद्रस्य। क्रतोर्भद्रस्य। त्रिपदः पादो यथा। (१५अ० ४४क०) अग्ने तम् अद्य। अग्ने तमद्य। चतुष्पदः पादो यथा। (१५अ० ४६क०) अग्ने विश्वेभिः सुमनाऽअनीकैः। अनेकपदः पादो यथा। (११अ० ३७क०) विधमम्। अग्ने। अरुषम् मियेध्य। विधूममग्नेऽअरुषम्मियेध्य ॥

## वर्णानामेकप्राणयोगः संहिता ॥१५८॥

एवं तावत्पादसंहिता ऋक्षु कर्त्तव्या यजुःषु त्वयं विधिः। वर्णानामेकोच्छ्वासोच्चारणयोगः पदे वा वाक्ये विश्रामः सा च प्राणसंहिता यत्र भूयांसि पदानि अतिक्रम्यावसानं भवति न त्वेकेन प्राणेन तान्विव्याप्तुं शक्यन्ते तत्रायं विधिः। यथा। (२१अ० ६१क०) "त्वामृद्यऽऋषऽआर्षेयऽऋषीणान्नपादवृणीतायं यजमानः" यत्र त्ववसानं शक्यते व्याप्तं, तत्रावसान एव विरतिः कर्त्तव्या यथा। (३६अ० ८क०) इन्द्रो विश्वस्य राजति ॥

## विप्रतिषेधऽउत्तरम्बलवदलोपे ॥ १५९ ॥

शास्त्रद्वयमन्यत्र चरितार्थमेकस्मिन्नर्थे सङ्गच्छते यत्र स तुल्यबलविरोधो विप्रतिषेध उक्तः। तत्रोत्तरं शास्त्रं बलवद्भवति लोपं वर्जयित्वा लोपे तु यतो लोपस्तदेव शास्त्रं बलवद्भवति यथा "स्वरितवान्त्स्वरित" इत्यस्यावकाशः। अनुदात्तस्वरितसन्धौ स्वरितो भवति यथा (२२अ० ७क०) स्वाहा अवक्रन्दाय। स्वाहाऽवक्रन्दाय, तथा च वक्ष्यति उदात्तवानुदात्तः। अस्यावकाशः। उदात्तानुदात्तसन्धौ उदात्तो भवति। यथा। (१अ० २७क०) सुक्ष्मा च असि। सुक्ष्मा चासि। स्वरितोदात्तसन्धौ परत्वादुदात्त एव भवति। (१अ० ३क०) यथा सुप्वा इति। सुप्वेति, (३अ० १०क०) रात्र्या इन्द्रवत्या। रात्रेन्द्रवत्या, अलोप इति किम्। स्य एष चेत्यनेन शास्त्रेण स्यशब्दस्य विसर्जनीयो व्यञ्जने परतो लुप्यते। यथा। (९अ० १४क० एष): (स्यः)। वाजी, एतच्च पूर्वं शास्त्रम्। अतोऽन्यद्भवति। रेफे लुप्यते दीर्घश्चोपधेत्यनेन शास्त्रेण रेफे परभूते लुप्यते विसर्जनीय उपधा च दीर्घमापद्यते। एतच्च परं शास्त्रम्

ततो लोपस्य बलीयस्त्वाल्लोप एव भवति नोपधादीर्घत्वम्। यथा (२३अ० १३क०) एषः स्यः राथ्यः। एषस्य राथ्यो वृषा, (२५अ० २६क०) एषः छागः। एषच्छागः। विसर्जनीयलोपः चच्छयोः शर्मिति न शकारः॥

## विसर्जनीयो रिफितः॥ १६०॥

इत उत्तरमकारोपध आकारोपधस्य विसर्जनीयो रिफितसंज्ञो भवति। वक्ष्यति करमनुदात्तम्। यथा। (२५अ० ४१क०) अच्छिद्रा गात्राण्यसिना मिथू कः। संज्ञाकरणे प्रयोजनम्। भाव्युपधस्य रिद्विसर्जनीय इति। करिति कः॥

## करमनुदात्तम्॥ १६१॥

करित्येतत्पदमनुदात्तं चेद्रिफितसंज्ञं भवति। अधिकारसूत्रमेतत्। यथा (३३अ० ५८क०) मह्निपार्थः पृथ्वीं सध्राकः। अनुदात्तमिति किम्। (२३अ० ५८क०) कोऽअस्य वेद भुवनस्य नाभिम्॥

## अन्तरनाद्युदात्तम्॥ १६२॥

अन्तरित्येतत्पदं रिफितसंज्ञं भवति आद्युदात्तं चेन्न भवति। अन्तरित्यन्तः (७अ० ५क०)। अन्तस्ते द्यावापृथिवी। अनाद्युदात्तमिति किम् (१०अ० १क०)। समुद्रस्य मध्यं चान्तस्थ, (२३अ० ६२क०) इयं वेदिः परोऽअन्तः॥

## अहरभकारपरम्॥ १६३॥

अहरित्येतत्पदं रिफितसंज्ञं भवति भकारपरं चेन्न भवति। यथा। (१५अ० ६क०) प्रवयाह्नाहर्जिन्व (११अ० ७५क०) अहरहरित्यहः। अहः। अहरहरप्रयावम्। अभ-

कारपरमिति किम् (६अ० १५क०) तत्ते॑ शुन्धतु शमहो॑भ्यः (२५अ० २क०)। द्युभिरहो॑भिरक्तुभिर्व्यु॑ष्टम् ॥

## आववरिति समानर्चि ॥ १६४ ॥

आवः। वः। इत्येते पदे रिफिते भवतः। उभे यद्येकस्यामृचि यदि भवतः। यथा (१३अ० ३क०)। आवरित्यावः विसी॑मतः सुरुचो॑ वेनऽआवः। वरिति॑ वः। सतश्चयो॑निमसतश्च विवः। समानर्चीति किम् (४अ० ५क०)। आ वो॑ देवासऽईमहे, (१६अ० ४६क०) नमो॑ वः किरिकेभ्यः। (६अ० २२क०) अस्मे वो॑ऽअस्त्विन्द्रियम् ॥

## स्तोत-वस्तः सनुत-रभा-वाद्वा ॥ १६५ ॥

स्तोतः वस्तः सनुतः अभाः वाः द्वाः। एतानि पदानि रिफितसंज्ञकानि भवन्ति। यथा (२३अ० ७क०) एतᳬ स्तो॑तरनेन। (३अ० २२क०) दोषावस्तर्धिया वयम्। (२०अ० ५२क०) आराच्चिद्द्वेषः सनुतर्युयोतु। (१२अ० ६१क०) अग्निᳬ स्वे योनावभारुखा। (५अ० ११क०) इदमहन्तस्त वार्व॑हिर्द्वा। (३०अ० १०क०) द्वार्भ्यः साममम् ॥

## स्वः पदमनरणे ॥ १६६ ॥

स्वरित्येतत्पदं रिफितसंज्ञं भवति। अरणशब्दो यदि परो न भवति यथा (१८अ० ५०क०) स्वः न। स्वर्ण घर्मः। (१अ० ११क०) स्वः अभि विख्येषम्। स्वरभि विख्येषम्, पदमिति किम्, पदावयवस्य रिफितसंज्ञा माभूत्। (१०अ० ६क०) राजस्वऽइति राज। स्वः। सोमस्य दात्रमसि स्वाहा। राजस्वः अनरण इति किम्। (२६अ० २क०) स्वायचारणाय च ? पदादिष्वाजित्पर इति वक्ष्यति तस्यायं पुरस्तादपवादः ॥

## पदादिस्वाजित्परः ॥ १६७ ॥

पदादिस्व यदि स्वशब्दोभवति तदा रिफितसंज्ञो भवति जित्परश्चेन्न स्यात् "द्वौ द्वौ प्रथमौ जित्" । "ऊष्माणश्च हवर्जं" जिदित्युक्तम् (११अ० २क० स्वर्ग्यायेति स्व॒ः । ग्याय । स्व॒र्ग्याय शक्त्या । पदादिरिति किम् (१०अ० ६क०) स्वाहा राजस्वः । अजित्परमिति किम् (३४अ० २०क०) स्वःसामिति स्व॒ःसाम् । पदसंहितोदाहरणम् ॥

## ह्वाः सवितः पुनस्त्वष्टर्नेष्टरकर्होतर्मातः प्रातर्जामातरजीगः प्रणेतरिति च ॥ १६८ ॥

ह्वाः सवितः पुनः त्वष्टः नेष्टः अकः होतः मातः प्रातः जामातः अजीगः प्रणेतः एतेषां पदानां विसर्जनीयो रिफितसंज्ञो भवति । यथा (१अ० २क०) मा ह्वार्मा ते । (९अ० १क०) देव सवितरिति सवितः । (४अ० १५क०) पुनर्मनः । (६अ० २०क०) देव त्वष्टर्भूरि ते । (२६अ० २१क०) ग्रावो नेष्टः पिब, (३८अ० ५क०) सरस्वति तमिह धातवेऽकः । (२३अ० ६४क०) सोमठं होतर्य्यज । (१०अ० २३क०) पृथिवि मातर्मा मा हिठंसीः । (२०अ० २९क०) इन्द्र प्रातर्जुषस्व नः । (२७अ० ३४क०) त्वष्टुर्जामातरद्भुत । (२९अ० १८क०) आदिद्ग्रसिष्ठऽओषधीरजीगः । (३४अ० ३६क०) भग प्रणेतर्भग सत्यराधः ॥

## स्वरं स्वरिः ॥ १६९ ॥

स्वरमिदं शास्त्रमन्यानि शास्त्राण्यपेक्ष्य । शिक्षाविहितं

व्याकरणविहितं चास्मिन् शास्त्रे उभयं यतः प्रक्रियते । अत एव हेतोः शिष्याणामेतच्छास्त्रश्राविणां वृद्धिर्भवति ॥

## इति कात्यायनकृतौ प्रातिशाख्य-सूत्रे प्रथमोऽध्यायः ।

इत्यानन्दपुरवास्तव्यश्रीवज्रटसुतोव्वटकृतौ प्रातिशाख्य-सूत्रभाष्ये प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ।

संज्ञाः परिभाषाश्च प्रथमाध्याये शास्त्रसंव्यवहारार्थमुक्ताः । इदानीं स्वरसंस्कारयोश्छन्दसि नियम इति प्रतिज्ञातौ । स्वरसंस्कारावारभ्येते तत्र च प्रथमं स्वरः प्रतिज्ञात इत्यतः स्वर एव प्रथममारभ्यते ॥

### स्वरितवर्जमेकोदात्तं पदम् ॥ १ ॥

एकं स्वरितं प्रथमं वर्जयित्वा एकोदात्तं पदम्भवति सर्वस्मिन्नेव पदे एकमक्षरं स्वरितमुदात्तं च भवति । अन्यान्यक्षराण्यनुदात्तानीति सूत्रार्थः । तत्र स्वरितस्य चत्वारो भेदा भवन्ति तद्यथा । आदिस्वरितमध्यस्वरितान्तस्वरितसर्वस्वरितानि पदानि भवन्ति । आदिस्वरितम् यथा (१६अ० २८क०) व्युमकेशायेति व्युप्त । केशाय । मध्यस्वरितं यथा (६अ० ६क०) मनुष्याणाम् । स्वर्याय । अन्तस्वरितं यथा (१अ० १२क०) वैष्णव्यौ, (१अ० २०क०) धान्यम् । सर्वस्वरितं यथा (३अ० ५क०) स्वः । उदात्तस्य चत्वारो भेदा भवन्ति तद्यथा । आद्युदात्तमध्योदात्तान्तोदात्तसर्वोदात्तानि पदानि

भवन्ति। आद्युदात्तं यथा (२४अ० १क०) अग्निः, (४अ० ६क०) स्वाहा। मध्योदात्तं यथा (१अ० २३क०) त्रितायं द्वितायं। अन्तोदात्तं यथा (१४अ० २२क०) इषे ऊर्जे रय्यै सर्वोदात्तं यथा (५अ० २०क०) प्र तत्। एता अष्टौ पदभक्तयोऽनेन सूत्रेणोक्ताः आद्युदात्तानुदात्तसर्वोदात्तानि वक्ष्यति। एवमेता एकादशपदभक्तयो भवन्ति सर्ववेदेषु॥

## अनुदात्तम्॥ २॥

स्वरितादन्यस्वरादुदात्ताद्वा यदवशिष्टं तदनुदात्तं भवति। उक्तान्येवोदाहरणानि। अधिकारार्थमेतत्॥

## नो नौ मे मदर्थे त्रिद्व्येकेषु॥ ३॥

अनुदात्तमित्यनुवर्त्तते नः नौ मे। एतानि मदर्थे वर्त्तमानानि अस्मदर्थं यदि ब्रुवन्ति। बहुवचनद्विवचनैकवचनाभिधायकानि च यदि भवन्ति यथासंख्यं वर्त्तमानानि अनुदात्तानि भवन्ति। नः यथा, (३६अ० ११क०) शन्नऽइन्द्राग्नी, (२५अ० १९क०) स्वस्ति नऽइन्द्रः। नौ यथा (२अ० २७क०) अग्ने गृहपते सुगृहपतिस्त्वयाग्ने ... गार्हपत्यानि सन्तु, मे यथा (१७अ० २क०) इमा मेऽअग्नऽइष्टका धेनवः। (२१अ० १क०) इमम् मे वरुण॥

## मा च॥ ४॥

मा इत्येतच्च पदमनुदात्तं भवति। अस्मदर्थे चेद्वर्त्तते। यथा (८अ० १९क०) आ मा गन्तां पितरा मातरा च। मदर्थ इति किम् (६अ० २२क०) मापो मौषधीर्हिंसीः॥

## वो वान्ते त्वदर्थे॥ ५॥

वः वाम् ते एतानि पदानि युष्मदर्थे वर्त्तमानानि बहु-

वचनद्विवचनैकवचनेषु यथासंख्यं वर्त्तमानानि अनुदात्तानि भवन्ति, वः। यथा (२६अ० ११क०) तँन्वो॑ दृस्मम्। (४अ० ५क०) आ वो॑ देवास॑ईमहे। वां यथा (७अ० ८क०) अ॒यँवां मित्रावरुणा सुतः। (७अ० ११क०) या वां कशा मधु॑मती, ते यथा (३अ० ५७क०) ए॒ष ते॑ रुद्र भागः। (३अ० १३क०) अ॒यं ते॒ योनिः ॥

## त्वा च ॥ ६ ॥

त्वा इत्येतच्च पदं युष्मदर्थे वर्त्तमानमनुदात्तं भवति। यथा (२५अ० ३७क०) मा त्वाग्निर्ध्वनयीद्धमगन्धिः। (३अ० २६क०) तन्त्वा॑ शोचिष्ठ दीदिवः। नो नौ म इति यथाश्रुतेन सिद्धे यन्मदर्थे इति विद्वयकेष्विति च वदति तच्छिष्यव्युत्पादनार्थम्। मा इत्येतस्य तु पदस्य मदर्थे इति विशेषणं कर्त्तव्यम्। प्रतिषेधार्थीयस्यापि सम्भवात्। वो वां ते त्वा एतेषां च पदानां त्वदर्थे इति विशेषणं शिष्यव्युत्पादनार्थमेव अन्यार्थस्याव्यभिचारात् ॥

## पूर्ववाननुदेशः ॥ ७ ॥

पूर्वैः पदैः प्रज्ञापितस्यार्थस्य यत्पश्चात्। अस्मै एषां अस्मिन्नित्यादि सर्वनामपदं तस्यैवार्थस्याभिधायकम्भवति तदनुदेशशब्देनोच्यते। तदनुदात्तम्भवति। अस्मै यथा (११अ० ७४क०) भर॑न्तोऽश्वायेव तिष्ठते घा॒समस्मै। एषां यथा (१०अ० ३२क०) दु॒र्हैषां कृणुहि भोज॑नानि। अस्मिन् यथा (३अ० १क०) आस्मिन् ह॒व्या जु॑होतन। पूर्ववानिति किम्, (७अ० २१क०) सोम॑ ÷ पवते॒ऽस्मै ब्रह्मणे। (१६अ० ४७क०) आ॒सां प्र॒जाना॑मे॒षाम्पशनाम् ॥

## असि ॥ ८ ॥

असीत्येतत्पदमनुदात्तं भवति (२अ० १क०) कृष्णोऽस्याखरेष्ठः), वेदिरसि बर्हिषे । आख्यातमसि शब्दस्तस्य वक्ष्यमाणोऽनुदात्तस्वरः प्राप्त एव इह यद्ग्रहणं तदाख्यातपदानभिज्ञस्यापि ज्ञानार्थम् ॥

## यथा गृभो भुवोऽग्निभ्यः ॥ ९ ॥

यथा शब्दो गृभो भुवोऽग्निशब्देभ्यः परोऽनुदात्तो भवति । गृभः, यथा (१२अ० ८५क०) पुरा जीवगृभो यथा । भुवः, यथा (२३अ० २९क०) मृत्यस्याश्चिभुवो यथा । अग्निर्यथा (८अ० ४०क०) भ्राजन्तोऽअग्नयो यथा । एतेभ्यः किम् (३अ० ५८क०) यथा नो वस्यसस्करत् ॥

## गिर्वणः ॥ १० ॥

गिर्वण इत्येतत् पदमनुदात्तं भवति । (५अ० २९क०) परि त्वा गिर्वणो गिरः । एतच्चामन्त्रितत्वादेवानुदात्तं प्राप्तं यत् पुनरुच्यते तदामन्त्रितानभिज्ञस्यापि प्रत्ययार्थम् ॥

## अग्ने घृतेनेति च ॥ ११ ॥

अग्ने पूर्वं घृतेनेत्येतत्पदमनुदात्तं भवति । यथा (१७अ० ५०क०) अग्ने घृतेनाहुत । अग्ने पूर्वमिति किम् । (३अ० ३क०) अङ्गिरो घृतेन वर्द्धयामसि ॥

## प्रचिकितश्च ॥ १२ ॥

प्रपूर्वं चिकित इत्येतत्पदमनुदात्तं भवति । यथा (१९अ० ५२क०) त्वꣳ सोम प्रचिकितो मनीषा । प्रपूर्वमिति किम् । अन्यपदपूर्वमनुदात्तं न भवति । एतदप्यामन्त्रितत्वादेवानुदात्तं मन्दधीप्रतिपत्त्यर्थमुच्यते ॥

## एनोऽपापे ॥ १३ ॥

एन इत्येतत् पदमपापे वाच्येऽनुदात्तं भवति। अवशिष्टं चैतत्प्रातिपदिकमात्रं सर्वलिङ्गं गृह्यते पुंलिङ्गं भवति यथा (१७अ० ५०क०) उदेनमुत्तरान्नय, स्त्रीलिङ्गं भवति यथा (१२अ० १५क०) मैनाम्तपसा माचिषाऽभि शोचीः, नपुंसके भवति यथा। (१२अ० ३५क०) मातेव पुत्रं विभृताप्स्वेनत्। अपाप इति किम्। (८अ० १३क०) देवकृतस्यैनसोऽवयजनमसि, (३अ० ४५क०) यदेनश्चकृमा वयम् ॥

## इह पूर्वꣳ श्रुतम् ॥ १४ ॥

इह पूर्वं श्रुतमित्येतदनुदात्तम्भवति। यथा (७अ० ८क०) ममेदिह श्रुतꣳ हवम्। इह पूर्वमिति किम्। (७अ० ८क०) श्रुतम्मे मित्रावरुणा हवेमा। एतद्व्याख्यातत्वादनुदात्तं मन्दधीप्रतिपत्त्यर्थमुच्यते ॥

## मन्ये पदपूर्वꣳ सर्वत्र ॥ १५ ॥

मन्ये इत्येतत् पदं पदपूर्वं अनुदात्तं भवति सर्वत्र यथा (१५अ० ४७क०) अग्निꣳ होतारं मन्ये दास्वन्तम्। आख्यातत्वादाख्यातवद्योगादिभिः स्वरविकारो यः प्राप्तः सोऽनेन सर्वत्र ग्रहणेन निषिध्यते अपदपूर्वस्य स्थाप्यते॥

## वा च कमु चित्समस्माद् घ ह स्म त्व ईम्मर्य्या अरे स्विन्निपाताश्चेत् ॥ १६ ॥

वा च कम् उ चित्। समस्मात्। घ। ह। स्म। त्व ईम्। मर्य्याः। अरे। स्वित्। एतानि पदानि अनुदात्तानि भवन्ति यदि निपातानि भवन्ति। असत्त्ववचनानि भवन्तीत्यर्थः। वा यथा। (८अ० ७क०) वातो वा मनो वा। च यथा (२६अ०

१क०) अग्निश्च पृथिवी च सन्नते। कं यथा। (२५अ० ४६क०) इमानु कं भुवना सीषधाम, उ यथा (४०अ० ८क०) यऽउ सम्भूत्याएं रताः। चिद्यथा। (८अ० २३का०) उतापवक्ता हृदया विधश्चित्। समस्मायथा। (३अ० २६क०) उरुष्या णोऽअघायतः समस्मात्, घ (७अ० ३२क०) यथा। आ घा येऽअग्निमिन्धते। ह यथा (२३अ० ६३क०) दधे ह गर्भमृत्वियम्। स्म यथा। (३अ० ४६क०) अस्ति हि ष्मा ते शुष्मिन्नवयाः, त्वो यथा। (१२अ० ४२क०) पीयति त्वोऽअनु त्वो गृणाति, ईम् यथा। (२३अ० ५५क०) काऽईमरे पिशङ्गिला। मर्य्याः यथा। (१०अ० ८क०) आविर्मर्य्याऽआवित्तोऽअग्निर्गृहपतिः। अरे यथा। (२३अ० ५७क०) अजारे पिशङ्गिला। स्विद्यथा। (२३अ० ७४क०) अधः स्विदासीद्दुपरि स्विदासीद्दत्। निपाता इति किम्। (४अ० १८क०) चिदसि मनासि ॥

## पदपूर्वमामन्त्रितमनानार्थे पादादौ ॥१७॥

पदपूर्वमामन्त्रितं यत् पदं तदनुदात्तं भवति। यदि तन्नानाभूतस्यार्थस्याभिधायकन्न भवति। यदि तत् द्विवचनबहुवचनेनारभ्यत इत्यर्थः। यदि च पादादौ न भवति पदपूर्वं भवति यथा। (४अ० १६क०) त्वमग्ने व्रतपाऽअसि। (३अ० ५६क०) वयꣳ सोम व्रते तव। अनानार्थ इति किम्। (५अ० ३४क०) मित्रस्य मा चक्षुषेक्षध्वमग्नयः, (२२अ० १९क०) आदित्यानां पत्वान्विहि देवाः। अपादादाविति किम्। (७अ० ११क०) या वां कशा मधुमत्यश्विना। (१५अ० ३०क०) सꣳ समिद्युवसे वृषन्नग्ने ॥

## तेनानन्तरा षष्ठ्येकपदवत् ॥ १८ ॥

तेनामन्त्रितेनाव्यवहिता षष्ठ्येकपदवद् भवति। आम-

न्तर्य्यं चेह देशकृतमर्थकृतं च गृह्यते। देशकृतं पुरस्तादुपरिष्टाद्वा षष्ठ्यन्तं पदमामन्त्रितस्य। अर्थकृतमेकार्थीभावः। एतदुक्तं भवति। यदि तत् षष्ठ्यन्तमामन्त्रितस्य विशेषणं भवति। अथैकपदवत् स्वरो भवति। एतदुक्तं भवति यदि षष्ठ्यन्तं वाक्यादौ पादादौ वा न भवति पदपूर्वं भवति अथ तदप्यनुदात्तं भवति। अतोऽन्यथात्वे आद्युदात्तं भवति। यथा (६अ० २७क०)। अ॒पा॒न्न॒पा॒त्। देवी॑रापोऽअपान्नपात्। ऊर्षी॑णान्नपात् यथा। (२१अ० ६१क०) ऊर्षी॑णान्नपाद्वृणीत। (३७अ० १८क०) विश्वा॑सां भुवां पते, (३४अ० ५६क०) उत्ति॑ष्ठ ब्रह्मणस्पते। अनन्तरेति किम्। (३४अ० ५८क०) ब्रह्म॑णस्पते॒ त्वम॒स्येत्यत्र एकपदवदिति च वदिति "व्यपदेशादन्यत्राद्युदात्तत्वं षष्ठ्या भवति यथा। (१२अ० १०८क०) ऊर्जो॑ नपाज्जातवेद इत्यत्र ऊर्क्शब्दस्य षष्ठ्यन्तस्य तेनानन्तरा षष्ठ्येकपदवदित्यनेन सूत्रेणामन्त्रितस्यानन्तरा षष्ठ्येकपदवत् स्वरं लभते इत्येतदुक्तं भवति॥ अधुनाऽऽमन्त्रितेन सह षष्ठ्या यत्रैकार्थीभावो न भवति तत्प्रत्युदाहरणभूतं सूत्रं शिष्यभ्रान्तिव्युदासार्थं स्वयमेव सूत्रकारः पठति॥

न पृथिवि देवयजन्योषध्या देव भूरेः पवित्रपते पवित्रपूतस्यापान्नपान्नृपान्नृपते सोमाग्नेः सोमेन्द्रस्य सोमसुवीर्य्यस्य सोम विश्वेषां देवानां प्रजापते यस्य यस्य देवाग्ने तवाग्ने व्राजस्याग्ने वरुणस्यापोऽअस्माकम् ॥ १९ ॥

पृथिवि देवयजन्योषध्याः, दे॒व भूरे॑ः। प॒वि॒त्र॒पते॒ प॒वि॒त्रपूतस्य अ॒पां न॒पा॒त्। नृणां नृपते। सो॒मा॒ग्नेः। सोमेन्द्रस्य।

सोम सुवीर्य्यस्य, सोम विश्वेषां देवानाम्। प्रजापते यस्य, यस्य देव। अग्ने तव। अग्ने वाजस्य। अग्ने वरुणस्य। आपोऽस्माकम्। एतेषामामन्त्रितानां याऽनन्तरा षष्ठी साऽनेकार्थीभावान्नैकपदवत् स्वरं लभते। यथा (१अ० २५क०) पृथिवि देवयजनी। पृथिवि देवयजन्योषध्यास्ते। देव भूरेर्यथा। (८अ० ६क०) वामस्य हि क्षयस्य देव भूरेः। पवित्रपते पवित्रपूतस्य यथा। (४अ० ४क०) तस्य ते पवित्रपते पवित्रपूतस्य। अपान्नपाद्यथा। (८अ० २४क०) अपान्नपान्नाप्तिरक्षन्नसुर्य्यम्। नृणान्नृपते यथा। (११अ० २७क०) त्वन्नृणान्नृपते जायसे शुचिः, सोमाग्नेर्यथा। (८अ० ५०क०) वृत्रभिक् त्वं देव सोमाग्नेः। सोमेन्द्रस्य यथा। (८अ० ५०क०) अग्नौ त्वं देव सोमेन्द्रस्य। सोम सुवीर्य्यस्य यथा। (७अ० १४क०) अच्छिन्नस्य ते देव सोम सुवीर्य्यस्य। सोम विश्वेषां देवानां यथा। (८अ० ५०क०) अस्मत्सखा त्वं देव सोम विश्वेषां देवानाम्॥ प्रजापते यस्य यथा। (१८अ० ४८क०) स नो भुवनस्य पते प्रजापते यस्य। यस्य यथा, (७अ० ७क०) यस्य देव दधिषे पूर्वपेयम्। अग्ने तव यथा। (१२अ० १०६क०) अग्ने तव श्रवो वयः। अग्ने वाजस्य यथा। (१५अ० ३५क०) अग्ने वाजस्य गोमतः। अग्ने वरुणस्य यथा। (२१अ० ३क०) त्वन्नोऽअग्ने वरुणस्य विद्वान्। आपोऽस्माकं यथा। (४अ० १२क०) आपोऽस्माकमन्तरुदरे सुशेवाः। एवमादीन्यन्यान्यपि प्रत्युदाहरणानि द्रष्टव्यानि, यथा। (१२अ० ८६क०) यस्यौषधीः प्रसर्पथ॥

**सुमङ्गल सत्यराजन्विकिरिद्र विलोहित दरिद्र नीललोहित श्रेयस्कर भूयस्कराम्बेऽम्बि-**

केऽम्बालिके शरव्ये ब्रह्म सꣳशिते मरुतोऽश्विना यव्ये गव्ये द्यावापृथिवीऽउरोऽग्नाऽ३इ पत्नीवँल्लाजीऽ३ञ्छाचीऽ३न्मीढुष्टम शिवतम सहस्राक्ष शतेषुधे वसुपते वसुदावन् ॥ २० ॥

सुमङ्गल सत्यराजन्। विकिरिद्र विलोहित। दरिद्र नीललोहित, श्रेयस्कर, भूयस्कर। अम्बेऽम्बिकेऽम्बालिके। शरव्ये ब्रह्म सꣳशिते। मरुतोऽश्विना। यव्ये गव्ये। द्यावापृथिवीऽउरो। अग्ना ३इ पत्नीवन्। लाजी३न्। शाची३न्। मीढुष्टम शिवतम। सहस्राक्ष शतेषुधे, वसुपते वसुदावन्। एतान्यामन्त्रितानि, नानुदात्तानि भवन्ति। पदपूर्वमित्यस्यापवादः। सुमङ्गल सत्यराजन्यथा (२०अ० ४क०) सुश्लोक सुमङ्गल सत्यराजन्। विकिरिद्र विलोहित यथा। (१६अ० ५२क०) विकिरिद्र विलोहित नमस्ते। दरिद्र नीललोहित यथा। (१६अ० ४७क०) अन्धसस्पते दरिद्र नीललोहित। अत्र सुमङ्गलविकिरिद्रशब्दस्य पादादित्वादाद्युदात्तत्वं सिद्धमेव इति तद्विशेषणार्थं द्वितीयपदस्योच्यते। एवं सर्वत्रैतज्जातीयकेषु द्विपदेषु प्रयोजनं द्रष्टव्यम्। श्रेयस्कर भूयस्कर यथा। (१०अ० २८क०) बहुकार श्रेयस्कर भूयस्कर। अम्बेऽअम्बिके यथा। (२३अ० १८क०) अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन, शरव्ये ब्रह्म सꣳशिते यथा। (१७अ० ४५क०) परापत शरव्ये ब्रह्म सꣳशिते। मरुतोऽअश्विना यथा। (२३अ० ४७क०) इता मरुतोऽअश्विना। यव्ये गव्ये यथा। (२३अ० ८क०) यव्ये गव्यऽए तदन्नमत्त देवाः, द्यावा-

पृथिवीऽन्तरो यथा। (४अ० ७क०) द्यावापृथिवीऽन्तरोऽन्तरिक्ष। अग्नाऽइद पत्नीवन्यथा। (८अ० १०क०) अग्नाऽइद पत्नीवन् सजूः। शाचीऽन् शाचीऽन् यथा। (२३अ० ८क०) भूर्भुवः स्वर्लाजीऽञ्छाचीऽन्। मीढुष्टम शिवतम यथा। (१६अ० ५१क०) मीढुष्टम शिवतम शिवो नः। सहस्राक्ष शतेषुधे यथा। (१६अ० १३क०) धनुष्ट्वꣳ सहस्राक्ष शतेषुधे। वसुपते वसुदावन् यथा। (१२अ० ४३क०) मघवा वसुपते वसुदावन्॥

**इडोत्तराणि नव स्वानोत्तराणि षडग्न्युत्तराणि चत्वारि भगोत्तराणि चेन्द्रोत्तरमेकꣳ सिनीवाल्युत्तरञ्च प्रजापतये ब्रह्मन्निति च॥२१॥**

इडोत्तराणि नवामन्त्रितानि पदान्याद्युदात्तानि भवन्ति। यथा। (८अ० ४३क०) इडे, रन्ते। हव्ये, काम्ये। चन्द्रे, ज्योते। अदिति। सरस्वति। महि। विश्रुति। स्वानोत्तराणि षडामन्त्रितानि पदान्याद्युदात्तानि भवन्ति। यथा। (४अ० २७क०) स्वान। भ्राज। अङ्घारे। बम्भारे। हस्त। सुहस्त। कृशानो। अग्न्युत्तराणि चत्वार्यामन्त्रितानि पदान्याद्युदात्तानि भवन्ति। यथा (३३अ० ४८क०) अग्ने। इन्द्र। वरुण। मित्र। देवाः, भगोत्तराणि च। चशब्दाच्चत्वार्य्येवामन्त्रितान्याद्युदात्तानि भवन्ति। यथा। (३४अ० ३६क०) भग प्रणेतः। भग सत्यराधः। भग। इन्द्रोत्तरमेकं पदमाद्युदात्तं भवति। यथा। (२६अ० ४क०) इन्द्र। गोमन्। सिनीवाल्युत्तरञ्च। चशब्दादेकमेवामन्त्रितमाद्युदात्तं भवति। यथा। (३४अ० १०क०) सिनीवालि पृथुष्टुके। प्रजापतये ब्रह्मन्निति

च। अत्र ब्रह्मन्नित्यामन्त्रितमाद्युदात्तं भवति। यथा (२२अ० ४क०) प्र॒जाप॑तये॒ ब्रह्म॑न्नश्व॑म्॥

## भूतिराद्युदात्तम्॥ २२॥

अनुदात्ताधिकारो निवृत्तः। इत उत्तरमाद्युदात्ताधिकारः प्रवृत्तः, भूतिरित्येतत् पदमाद्युदात्तं भवति। यथा (३०अ० १७क०) भूत्यै॑ जागर॒णम्। (१२अ० ६५क०) नमो॒ भूत्यै॒ येदम्। भूतिरिति किम्। (१८अ० ११क०) भू॒तं च॑ मे भवि॒ष्यच्च॑ मे॥

## कदा न रिष्येम पूर्वम्॥ २३॥

कदेत्येतत्पदमाद्युदात्तं भवति। न रिष्येम पूर्वं चेद्भवति यथा (३४अ० ४१क०)। न रिष्येम॒ कदा॑ च॒न। न रिष्येम पूर्वमिति किम् (३अ० ३२क०)। कदा॒ च॒न स्त॒रीर॑सि॥

## आमन्त्रितञ्च॥ २४॥

आमन्त्रितमाद्युदात्तम्भवति। यस्यामन्त्रितस्याधस्तात् स्वरो न विहितः। कस्य चाधस्तात् स्वरो न विहितः। पदपूर्वं यन्न भवति। पादादौ वाक्यादौ वा यद्भवति तदाद्युदात्तं भवति। अपदपूर्वम्भवति यथा (३अ० ३८क०)। अग्ने॑ गृहपते। वाक्यादौ भवति यथा (५अ० ३४क०)। अग्न॑यः सगराः (२२अ० १८क०)। देवा॑ऽआशापालाः। पादादौ भवति यथा (७अ० ११क०)। या॒ वा॒ङ्क॒शा मधु॑म॒त्यश्वि॑ना (३३अ० १०क०)। विश्वे॑भिः सो॒म्यम्मध्वग्ने॑। सुमङ्गलादि तु निपातितमेव॥

## कृष्णो मृगसँय्योगे॥ २५॥

कृष्णशब्दो मृगवचन आद्युदात्तो भवति। यथा। (२अ०

१क०) कृष्णो॑ स्याखरे॒ष्ठः)। (२४अ० ३६क०) कृष्णो॒ रात्र्या-ऽश्वो॑ ज॒तुः)। मृगसंयोग इति किम्। (२४अ० ४०क०) ख्रा। कृष्णाः कृ॒र्णो गर्द॒भः)। अत्र कृष्णशब्दो वर्णवचनः वर्णविशेषाभिमतत्वात्॥

## व्ययवांश्चान्तः॥ २६॥

अन्तःशब्दो द्विविधः व्ययवानव्ययवांश्च यस्य विभक्त्यादिभिर्विकारो न क्रियते सोऽव्ययवान्। तथा चोक्तम्। सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययमिति। यस्य पुनर्विभक्त्यादिभिर्विकारः क्रियते स व्ययवान्। स चाद्युदात्तो भवति। यथा (१७अ० २क०)। समु॒द्रस्य॑ मध्य॑ चान्तश्च॰ (२३अ० ६२क०)। इ॒यं वेदि॒ः पर॒ोऽन्त॑÷ पृ॒थि॒व्याः)। व्ययवानिति किम्। (७अ० ४क०) अ॒न्तर्य॑च्छ मघवन्॥

## परः प्रधाने॥ २७॥

परशब्दः प्रधानवचनः अपरिमितवचन आद्युदात्तो भवति। यथा। (८अ० ३६क०) य॒स्मान्न जा॒तः) परो॑ऽअ॒न्यो-ऽअस्ति॑। (२३अ० ६२क०) इ॒यं वेदि॒ः पर÷। प्रधान इति किम्। (१७अ० २९क०) प॒रो दि॒वा प॒रऽए॒ना पृ॑थि॒व्या॥

## मात्रा च परिमाणे॥ २८॥

मात्राशब्दश्च परिमाणवचन आद्युदात्तो भवति। यथा। (२३अ० ४७क०) कस्य॒ मात्रा॒ न विद्यते। (२३अ० ४८क०) गोस्तु मात्रा॒ न विद्यते। परिमाण इति किम्। (२२अ० १९क०) वि॒भूर्मा॒त्रा प्र॒भूः) पि॒त्रा। अत्र मातृशब्दस्य सम्बन्धिवचनस्य तृतीयान्तस्यैतद्रूपं भवति। अतः परिमाणवाची न भवति॥

## दक्षिणा च ॥ २९ ॥

दक्षिणाशब्दश्चाद्युदात्तो भवति । यथा । (१८अ० ४२क०) तस्य दक्षिणाऽअप्सरसः । (१७अ० ४०क०) दक्षिणा यज्ञः पुरऽएतु सोमः ॥

## न दक्ष विश्वकर्मा निषद्येन्द्रस्य पातु सदः सद्भ्येषु ॥ ३० ॥

दक्ष विश्वकर्मा निषद्य । इन्द्रस्य । पातु । सदः । सद्भ्यः । एतेषु परभूतेषु दक्षिणाशब्द आद्युदात्तो न भवति । दक्ष (१६अ० ६४क०) यथा । दक्षं दक्षिणा दक्ष प्रतीची(ः । विश्वकर्मा यथा । (१३अ० ५५क०) अयं दक्षिणा विश्वकर्मा । निषद्य यथा । (१९अ० ६२क०) आच्या जानु दक्षिणतो निषद्य । इन्द्रस्य यथा । (३७अ० १२क०) पुत्रवती दक्षिणतऽइन्द्रस्याधिपत्ये । पातु यथा । (५अ० ११क०) मनोजवास्त्वा पितृभिर्दक्षिणतः पातु । सदः यथा । (९अ० ३६क०) ये अग्ने त्वा दक्षिणासदः । सद्भ्यः यथा । (९अ० ३५क०) ये अग्ने त्वेभ्यो देवेभ्यो दक्षिणासद्भ्यः ॥

## कर्णः स्वाङ्गे ॥ ३१ ॥

कर्णशब्दः स्वाङ्गाभिधाय्याद्युदात्तो भवति । यथा । (२५अ० २१क०) भद्रं कर्णेभिः शृणुयाम देवाः । (२५अ० २क०) श्रोत्राभ्यां कर्णौ ते दुन्दुभिं धरकण्ठेन । स्वाङ्ग इति किम् । (२४अ० ४०क०) ष्वा कृष्णाः कर्णो गर्दभः ॥

## महो नपुꣳसके ॥ ३२ ॥

महशब्दो नपुंसकाभिधाय्याद्युदात्तो भवति । यथा । (३अ० २०क०) महस्थ महो वो भक्षीय । नपुंसक इति किम् ।

(४अ० ३५क०) मृद्धो देवायु तद्धृतठं० सपर्य्यत। (३३अ
१७क०) मृद्धोऽग्नेः) समिधानस्य शर्मणि॥

## अवस्य॥ ३३॥

अवःशब्दो नपुंसकवाच्याद्युदात्तो भवति यथा। (१२अ०
१०६क०) अग्ने तव अवो वयः। नपुंसक इति किम्।
(१८अ० १क०) अवश्च मे श्रुतिश्च मे॥

## अम्बो वीर्य्ये॥ ३४॥

अम्बशब्दो वीर्य्यवचन आद्युदात्तो भवति। यथा। (३अ०
२०क०) अम्बुस्थाम्बो वो भक्षीय। वीर्य्य इति किम्।
(३०अ० १०क०) स्वप्नायाम्बमधर्माय। (४०अ० ८क०) अ_न्ध-
न्तमः प्रविशन्ति॥

## एता वर्णे॥ ३५॥

एताशब्दो वर्णवचन आद्युदात्तो भवति। यथा। (२४अ०
८क०) एताऽऐन्द्राग्नाः)। वर्ण इति किम्। (१७अ० २क०)
ए_ता मेऽअग्न इष्टकाः॥

## रोहितस्य केवलः॥ ३६॥

रोहितशब्दस्य वर्णवचनः केवलः असमासस्थ आद्युदात्तो
भवति। यथा। (२४अ० २क०) रोहितो धूम्ररोहितः।
वर्णवाचीति किम्। (२४अ० ३७क०) रोहित्कुण्डृणाची
गोलत्तिका। केवल इति किम्। (२४अ० २क०) धूम्ररो-
हितः कर्कन्धुरोहितः॥

## यन्त्री राट्॥ ३७॥

यन्त्रीशब्द आद्युदात्तो भवति। राट् परश्चेद्भवति।

यथा। (१४अ० २२क०) यन्त्री राट्। राट् पर इति किम्। यन्त्र्यसि यमनी ॥

## ओषधीरनामन्त्रिते ॥ ३८ ॥

ओषधीशब्दोऽनामन्त्रितविषय आद्युदात्तो भवति। यथा। (१२अ० ७५क०) याऽओषधीः पूर्वा जाताः। अनामन्त्रित इति किम्। (१२अ० ८६क०) यस्यौषधीः प्रसर्प्थ ॥

## सर्वं विश्वं मानुषाशाः स्वाहा वाजः पयो नमः ॥ ३९ ॥

सर्वं। विश्वं। मानुषा। आशाः। स्वाहा। वाजः। पयः। नमः। एतानि पदान्याद्युदात्तानि भवन्ति। सर्वं यथा। (३२अ० २क०) सर्वे निमिषा जज्ञिरे। विश्वं यथा। (३२अ० ८क०) यत्र विश्वं भवत्येकनीडम्। मानुषा यथा। (१२अ० १११क०) दैव्यं मानुषा युगा। आशा यथा। (२७अ० ७क०) विश्वाऽआशाः प्रमुञ्चन्मानुषीभियः। स्वाहा यथा। (२२अ० ७क०) हिङ्काराय स्वाहा। वाजः यथा। (१८अ० १क०) वाजश्च मे। पयः यथा। (१८अ० ३६क०) पयः पृथिव्याम्। नमः यथा। (१६अ० १७क०) नमो हिरण्यबाहवे ॥

## असि शिवा सुषदा पयस्वती यत्ते मधुमतीर्वर्चस्वानोजिष्ठो भ्राजिष्ठः शुष्मिणी भद्रवाच्याय वन्द्यो मेध्यो यमादित्यास्त्रितः सोमेन स्वसेत्येतेषु ॥ ४० ॥

शिवा। सुषदा। पयस्वती। यत्ते। मधुमतीः। वर्चस्वान्।

ओजिष्ठ । भ्राजिष्ठ शुष्मिणी । भद्रवाच्याय । वन्द्यः । मेध्यः । यमः । आदित्यः । त्रितः । सोमेन । स्वसा । असीत्यधस्तादनुदात्त उक्तः स एतेषु परभूतेषु आद्युदात्तो भवति । शिवा यथा । (१अ० २७क०) सुक्ष्मा चासि शिवा । सुषदा यथा । (१अ० २७क०) स्योना चासि सुषदा । पयस्वती यथा । (१अ० २७क०) ऊर्जस्वती चासि पयस्वती च । यज्ञे यथा । (५अ० ९क०) योऽस्याम्पृथिव्यामसि यज्ञे । मधुमतीर्यथा ।* (७अ० १क०) येषां भागोऽसि मधुमतीः । वर्चस्वान्यथा । (८अ० ३८क०) त्वन्देवेष्वसि वर्चस्वान् । ओजिष्ठः यथा । (८अ० ३८क०) त्वन्देवेष्वस्योजिष्ठः । भ्राजिष्ठः यथा । (८अ० ३९क०) त्वन्देवेष्वसि भ्राजिष्ठः । शुष्मिणी यथा । (१९अ० ७क०) सुरा त्वमसि शुष्मिणी । भद्रवाच्याय यथा । (२१अ० ६१क०) होतरसि भद्रवाच्याय । वन्द्यः यथा । (२९अ० ३क०) ईड्यश्चासि वन्द्यः । मेध्यः यथा । (२९अ० ३३क०) आशुश्चासि मेध्यश्च सप्ते । यमः यथा । (२९अ० १४क०) असि यमः । आदित्यः यथा । (२९अ० १४क०) असि आदित्योऽअर्वन् । त्रितः यथा । (२९अ० १४क०) असि त्रितो गुह्येन । सोमेन यथा । (२९अ० १४क०) असि सोमेन । स्वसा यथा । (३४अ० ३३क०) या देवानामसि स्वसा ॥

## धनदारत्नधाभ्याञ्च ॥ ४१ ॥

धनदारत्नधाभ्याम्परोऽसिशब्द आद्युदात्तो भवति । धनदा यथा । (९अ० २८क०) त्वꣳ हि धनदाऽअसि । रत्नधा यथा । (२६अ० २१क०) त्वꣳ हि रत्नधाऽअसि ॥

## रायोऽपोषे ॥ ४२ ॥

राय इत्येतत्पदमपोषे परे चाद्युदात्तं भवति यथा ।

(४अ० २२क०) त्वे रायो मे रायः। अपोष इति किम्। (४अ० २२क०) मा वयꣳ रायस्पोषेण वि यौष्म ॥

न भागमीशिषयोः ॥ ४३ ॥

राय इत्येतत्पदं भागमीशिषयोः परयोराद्युदात्तन्न भवति। भागं यथा। (३४अ० २३क०) रायो भागम्। ईशिषे यथा। (१७अ० ७१क०) रायऽईशिषे ॥

त्रिधा बद्धहितयोः ॥ ४४ ॥

त्रिधाशब्दो बद्धहितयोः परयोराद्युदात्तो भवति। बद्धो यथा (१७अ० ९१क०) त्रिधा बद्धो वृषभो रोरवीति। हितं यथा (१७अ० ९२क०) त्रिधा हितं पणिभिर्गुह्यमानम् ॥

सुकृतम्भूते ॥ ४५ ॥

सुकृतशब्दो भूताभिधाय्याद्युदात्तो भवति। यथा (७अ० ३९क०) उरुः पृथुः सुकृतः कर्तृभिर्भूत्। भूत इति किम्। सूनृतञ्च (१८अ० ५क०) मे सुकृतञ्च मे ॥

द्विरुदात्तानि ॥ ४६ ॥

द्विरुदात्तं येषु तानि पदानि वक्ष्यन्त इति सूत्रशेषः। अधिकारसूत्रमेतत् ॥

बृहस्पतिर्वनस्पतिर्नराशꣳस स्तनूनप्त्वे तनूनपान्नक्तोषासोषासानक्ता द्यावापृथिवी द्यावाक्षामा क्रतूदक्षावभ्यामेतवाऽअन्वेतवा इति च ॥ ४७ ॥

(१७अ० ४०क०) बृहस्पतिः। (२०अ० ४५क०) वनस्पतिः (२०अ० ३७क०) नराशꣳसः, (४अ० ५क०) तनूनप्त्रे,

(२०अ० ३७क०) तनूनपात्, (१२अ० २क०) नक्तोषासा, (२०अ० ४१क०) उषासा नक्ता, (१७अ० २०क०) द्यावापृथिवी, (१२अ० २क०) द्यावाक्षामा, (७अ० २७क०) क्रतूदक्षाभ्याम्, (१७अ० ८७क०) एतवै, (८अ० २३क०) अन्वेतवै, एतानि पदानि द्विरुदात्तानि भवन्ति अदेवताद्वन्द्वार्थं आरम्भः प्रचुराण्येवोदाहरणानि॥

देवताद्वन्द्वानि चानामन्त्रितानि ॥ ४८ ॥

देवताद्वन्द्वानि च द्विरुदात्तानि भवन्ति आमन्त्रितानि वर्जयित्वा। यथा (२अ० १क०) अग्नीषोमाभ्यां जुष्टं गृह्णामि (७अ० २३क०) मित्रावरुणाभ्यां त्वा। देवताद्वन्द्वानीति किम् (४अ० ६क०) ऋक्सामयोः शिल्पे (४अ० २क०) दीक्षातपसोस्तनूरसि। अनामन्त्रितानीति किम् (७अ० १०क०) ताभ्येनु मित्रावरुणा, चशब्दादधस्तनसूत्रविहितान्यनामन्त्रितानि द्विरुदात्तानि भवन्ति आमन्त्रितानि त्वामन्त्रितस्वरंभजन्ते। यथा (२६अ० ३क०) बृहस्पते ऽअति यदर्यो ऽअर्हात् (२८अ० २६क०) तनूनपात्पथ ऽऋतस्य यानान्॥

इन्द्राबृहस्पतिभ्यामिन्द्राबृहस्पती इति त्रीणि ॥ ४९ ॥

इन्द्राबृहस्पतिभ्यामिन्द्राबृहस्पती इत्येतयोः पदयोस्त्रीण्यक्षराण्युदात्तानि भवन्ति। इन्द्राबृहस्पतिभ्यां यथा (७अ० २३क०) इन्द्राबृहस्पतिभ्यां त्वा देवाव्यं यज्ञस्य। इन्द्राबृहस्पती यथा (२५अ० ६क०) इन्द्राबृहस्पती ऽउरुभ्याम्॥

सर्वमग्नाऽ३इ लाजीँ३ञ्छाचीँ३निति त्रिमात्राणि च ॥ ५० ॥

अग्नाऽ३इ लाजीऽ३न् शाचीऽ३न् एतानि पदानि सर्वोदात्तानि भवन्ति त्रिमात्राणि च यान्यक्षराण्येतेषु पदेषु भवन्ति, यथा (८अ० १०क०) अग्नाऽ३इ इह आकारस्त्रिमात्रः (२३अ० ८क०) लाजीऽ३निहेकारः शाचीऽ३निहेकारः ॥

प्रणवश्च ॥ ५१ ॥

प्रणवश्च सर्वोदात्तो भवति त्रिमात्रश्च यथा (४०अ० १७क०) ओम् ३खम्ब्रह्म ॥

विविशाऽ३ इति चानुदात्तम् ॥ ५२ ॥

विविशा३ इत्येतत् पदं सर्वानुदात्तं भवति अन्त्यमक्षरं चास्य त्रिमात्रं भवति यथा (२३अ० ४९क०) तेषु विश्वं भुवनमाविविशा३, इहाकारस्त्रिमात्रः। अनुदात्तमिति किम्, (२३अ० ५०क०) विश्वम्भुवनमाविवेश ॥

आसीदिति चोत्तरं विचारे ॥ ५३ ॥

आसीदित्येतत्पदं विचारे वर्त्तमानमुत्तरं सर्वानुदात्तं भवति तस्य चान्त्यमक्षरं त्रिमात्रं भवति यथा (३३अ० ७४क०) उपरि स्विदासी३त्, इहाकारस्त्रिमात्रः, विचार इति किम्, (२३अ० ११क०) का स्विदासीत् ॥

पूर्वमन्तोदात्तम् ॥ ५४ ॥

आसीदित्येतत्पदं पूर्वं विचारे वर्त्तमानमन्तोदात्तं भवति त्रिमात्रं चास्यान्त्यमक्षरं भवति। यथा (३३अ० ७४क०) अधः स्विदासी३त् इहेकारस्त्रिमात्रः ॥

द्वन्द्वश्चेन्द्रसोमपूर्वं पूषाग्निवायुषु ॥ ५५ ॥

देवताद्वन्द्वं च इन्द्रसोमपूर्वं पूषाग्निवायुषु परभूतेष्वन्तोदात्तं भवति, द्विरुदात्तापवादः, इन्द्रपूर्वं यथा (२५अ० २५क०)

इन्द्राण्याः प्रियमध्येति पार्थ÷, (२अ० १५क०) इन्द्राग्नी-हव्यातुमगूज्ञ्षम् (७अ० ८क०) इन्द्रवायुभ्यान्त्वै षते योनि÷। सोमपूर्वस्य यथासम्भवमुदाहरणम् (२४अ० १क०) ब्राह्मोः सौमापौष्णाः॥

## अग्निस्त्वेन्द्रे॥ ५६॥

अग्निपूर्वस्येन्द्रोत्तरपदो देवताद्वन्द्वसमासोऽन्तोदात्तो भवति यथा (७अ० ३२क०) अग्नीन्द्राभ्यान्त्वै षते योनिः॥

## ऋक्सामे च॥ ५७॥

ऋक्पूर्वपदः सामशब्दोत्तरपदस्य द्वन्द्वसमासोऽन्तोदात्तो भवति। यथा (४अ० १क०) ऋक्सामाभ्यां सन्तरन्तः॥

## यतो गतौ॥ ५८॥

यत इत्येतत्पदं गतौ वर्त्तमानमन्तोदात्तं भवति। यथा (११अ० २क०) स्वर्यतो धिया दिवम्, इण्गतावित्यस्य तद्रूपम्, गताविति किम् (२१अ० ६३क०) यतो जातः प्रजापतिः॥

## पायोर्विशः॥ ५९॥

पायुशब्दात्परो विशः शब्दोऽन्तोदात्तो भवति। यथा (१३अ० ११क०) पायुर्विशोऽअस्याऽअदब्धः, पायोरिति किम् (१७अ० ८६क०) इन्द्रन्दैवीर्विशो मरुत÷॥

## आयुरर्य्यमोर्वश्यस्तिभ्यः॥ ६०॥

आयुरित्येतत्पदम् अर्य्यमा उर्वशी अस्ति शब्देभ्यः परमन्तोदात्तं भवति। अर्य्यमा यथा (२५अ० २४क०) मा नो मित्रो वरुणोऽअर्य्यमायुः), उर्वशी यथा (५अ० २क०) उर्वश्यस्यायुरसि, पदसंहितोदाहरणम्। अस्ति यथा (१५अ०

६२क०) अर्वस्म ते व्रजनं कृष्णमस्ति प्रायोऽहं। एतेभ्य इति किम् (१८अ० ३क०) आयुश्च मे जरा च मे ॥

अस्य रोचनाऽसौ बोधा मे पारम्पुरऽएतारो दिवः कोऽहन्त्वम्महीँय्य्य ईशऽईशानेभ्यः ॥६१॥

रोचना असौ बोधा मे पारम् पुरऽएतारः दिवः कः अहम् त्वम् महीम् यऽईशे ईशानम् एतेभ्यः परः अस्यशब्दोऽन्तोदात्तो भवति, रोचना यथा (३अ० ७क० ) अन्तश्चरति रोचनास्य, असौ यथा (१०अ० २०क०) असावस्य पिता वयं स्याम्, बोधा मे यथा (१२अ० ४२क०) बोधा मेऽअस्य वचसो यविष्ठ, पारम् यथा (१२अ० ७३क०) अगन्म तमसस्पारमस्य, पुरऽएतारो यथा (१७अ० १४क०) ये ब्रह्मणः पुरऽएतारोऽअस्य, दिवः यथा (२३अ० ५०क०) एकेनाङ्गेन दिवोऽअस्य पृष्ठम्, कः यथा (२३अ० ५९क०) कोऽअस्य वेद भुवनस्य नाभिम्, अहं यथा (२३अ० ६०क०) वेदाहमस्य भुवनस्य नाभिम्, त्वम् यथा (३४अ० ५८क०) ब्रह्मणस्पते त्वमस्य यन्ता, महीम् यथा (३३अ० २९क०) इमान्ते धियम्प्रभरे महो महीमस्य, यऽईशे यथा (२३अ० ३क०) यऽईशेऽअस्य द्विपदः, ईशानम् यथा (२७अ० ३५क०) ईशानमस्य जगतः ॥

प्रत्नां यज्ञस्य हविषः पाहीत्पातं मह्रो यजमानस्य होतुरजरासो लोकेषु च ॥६२॥

प्रत्नाम् यज्ञस्य हविषः पाहि इत् पातम् मह्रः यजमानस्य होतुः अजरासः लोकः इत्येतेषु च प्रत्ययेषु पश्च शब्दोऽन्तोदात्तो भवति, प्रत्नां यथा (३अ० १६क०) अस्य प्रत्नामनुद्युतम्, यज्ञस्य यथा (४अ० १०क०) अस्य यज्ञस्योदृचः,

हुविषः यथा (६अ० ११क०) अस्य हुविषस्त्मना यज, पाहि यथा (२६अ० २३क०) अंख्नत्तमठं॰ सुमनाऽअस्य पाहि। इत् यथा (३३अ० ९७क०) अस्येदिन्द्रो वावृधे, पातम् यथा (७अ० ३१क०) अस्य पातन्धियेषिता, मङ्खः यथा (९अ० १८क०) अस्य मङ्खं ÷ पिबत, युजमानस्य यथा (२२अ० २२क०) अस्य यजमानस्य वीरो जायताम्, होतुर्यथा (२८अ० ११क०) अस्य होतु ÷ प्र्दिश्यृतस्य वाचि। अजरासो यथा (३३अ० १क०) अस्याजरासो दुमाम्, लोकः यथा (३५अ० १क०) लोकः) सुतावतः ॥

## अनुदात्तमन्यत् ॥ ६३ ॥

अस्येत्येतत् पदमुक्तादन्यदनुदात्तं भवति, यथा (२३अ० ५८क०) षडस्य विष्ठाः) अतम् (३३अ० ९७क०) अद्यातमस्य, पूर्ववाननुदेश इत्येतस्यैवायं प्रपञ्चः ॥

## पङ्क्तौहंसयोरन्त उदात्त आदिर्वा ॥ ६४ ॥

पङ्क्तौः शब्दस्य हंसशब्दस्य चान्त उदात्तो भवति आदिर्वा उदात्तो भवति स्वरविकल्पः, पङ्क्तौर्यथा (२१अ० ५९क०) पचन्पङ्क्तौः, हंसः यथा (३०अ० २०क०) पंस्रुलुभ्यो हंसाय ॥

## इष्टं इष्टिः ॥ ६५ ॥

इत्युक्तार्थम् ॥

## इति कात्यायनकृतौ प्रातिशाख्यसूत्रे द्वितीयोऽध्यायः।

इत्यानन्दपुरवास्तव्यवज्रटसुतोव्वटकृतौ प्रातिशाख्यभाष्ये द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ।

स्वरसंस्कारयोश्छन्दसि नियम इति प्रतिज्ञातम्, तत्र प्रथमाध्याये स्वरसंस्कारयोरेवाङ्गभूताः संज्ञाः परिभाषा उक्ताः, द्वितीये स्वरः । अधुना क्रमप्राप्तः संस्कारोऽभिधीयते लोपागमवर्णविकारप्रकृतिभावलक्षणः ॥

### सꣳहितायाम् ॥ १ ॥

इत्ययमधिकारः आसप्तमाध्यायपरिसमाप्तेः, यदित ऊर्द्ध्वमनुक्रमिष्यामः संहितायामित्येवं तद्वेदितव्यं वक्ष्यति च "उदः स्तभाने लोपम्" उत् (१७अ० ७२क०) स्तभान उत्त॑भान तेज॑सा दिव॒ऽउद्द्‌ꣳ॑ह ॥

### अर्थः पदम् ॥ २ ॥

संहितालक्षणमुक्तम् (प्रा० अ० १ सू० १५८) "वर्णानामेकप्राणयोगः सꣳहितेति" अधुना पदलक्षणमुच्यते अर्थाभिधायि पदम् पद्यते गम्यते ज्ञायतेऽर्थोऽनेनेति पदम् यद्येवम् निपातस्यानर्थकस्य पदसंज्ञा न प्राप्नोति नैष दोषः उपरिष्टादर्थभेदनिबन्धनं पदचतुष्टयं वक्ष्यति "नामाख्यातोपसर्गनिपाताश्चेति" तत्रास्य पदसंज्ञा भविष्यति यथा क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् । सत्त्वाभिधायकन्नाम निपातः पादपूरण इति सूत्रकारस्य त्वयमभिप्रायः पदप्रतिरूपकस्य पदावयवस्य पदसंज्ञा माभूदित्यतोऽर्थग्रहणं इहैव पदसंज्ञा यथा स्यात् (३०अ० १८क०) गोव्य॒च्छम॒न्तकाय गोघा॒तम्, इह माभूत् (१८अ० १२क०) गो॒धूमा॑श्च मे ॥

### पदान्तपदाद्योः सन्धिः ॥ ३ ॥

यः कश्चिद्वैदिकभाषासन्धिरुच्यते स पदान्तपदाद्योर्वेदि-

तव्य इति, ते सन्धयश्चत्वारो भवन्ति स्वरयोः, व्यञ्जनयोः, स्वरव्यञ्जनयोस्तु द्विप्रकारः। पूर्वः स्वरो भवति पश्चाद्व्यञ्जनानि, व्यञ्जनानि वा पूर्वाणि भवन्ति पश्चात्स्वर इति, स्वरयोर्भवति यथा (४अ० १क०) आ इदम् एदम्। (१८अ० ४५क०) वरुण इह वरुणेह। व्यञ्जनयोर्भवति यथा (१अ० २२क०) सम् यौमि, सँय्यौमि, (१अ० २१क०) सम् वपामि सँवपामि, स्वरपूर्वो भवति यथा (१अ० १क०) इषे त्वा इषे त्वा, ऊर्जे त्वा ऊर्जे त्वा, व्यञ्जनपूर्वो भवति यथा (१७अ० ५०क०) उत् एनम् उदेनम्, परिभाषासूत्रमेतत्॥

## न परकालः पूर्वकाले पुनः॥ ४॥

व्यन्तराः काला इति वक्ष्यति तत्र यः परकालः सन्धिः पूर्वकाले सन्धौ सति पुनः प्राप्नुवन्न भवति यथा (प्रा० अ० ३ सू० १४२) "आकारोपधो यकारमिति, नकारस्याकारोपधस्य यकारो विहितः स्वरे प्रत्यये, (७अ० ३९क०) मह्नाँ२॥ऽइन्द्र इति, यथा (प्रा० अ० ४। सू० ३६) "कण्ठ्यपूर्वो यकारमरिफित इति, अवर्णपूर्वस्य विसर्जनीयस्य यकारो विहितः स्वरे प्रत्यये, (१२अ० ९२क०) याऽओषधीरिति ततो द्विग्रब्दात् परं लक्षणमुक्तम् (प्रा० अ० ४। सू० १२२) "यवयोः पदान्तयोः स्वरमध्ये लोपः" ततो यलोपे कृते द्विग्रब्दात् पूर्वं शास्त्रं पुनः प्रवर्त्तते (प्रा० अ० ४। सू० ५२. ५३) "कण्ठ्यादिवर्णं एकारम्", "उवर्णं ओकारमिति। तत्प्रवर्त्तमानन्निषिध्यत इति सूत्रार्थः॥

## व्यन्तराः कालाः॥ ५॥

कालाधिकारः व्हिः अन्तरा येषां सन्धिकालानां ते व्यन्तराः कालाः कालशब्दः स्थानपर्य्यायः, उक्तमुदाहरणम्॥

## विसर्जनीयः ॥ ६ ॥

विसर्जनीयसन्धिरधिकृत इति सूत्रार्थः ॥

## चछयोः शम् ॥ ७ ॥

चकारछकारयोः प्रत्यययोर्विसर्जनीयः शकारमापद्यते, चकारे यथा (१८अ॰ १क॰) वाज॑÷ च मे, वाज॑श्च मे, छे यथा (१४अ॰ १८क॰) अस्त्रीवय॑÷ छन्द॑÷ अस्त्रीवयश्छन्द॑÷ ॥

## तथयोः सम् ॥ ८ ॥

तकारथकारयोः प्रत्यययोर्विसर्जनीयः सकारमापद्यते, तकारे यथा (३अ॰ ५७क॰) आखुः ते पशुः आखुस्ते पशुः, (१६अ॰ १क॰) नम॑÷ ते रुद्र नम॑स्ते रुद्र, विसर्जनीयथकारसन्धिस्तु संहितायां न विद्यते अतो रूपोदाहरणं दीयते, कः थकारः कस्थकारः ॥

## प्रत्ययसवर्णम्मुदि शाकटायनः ॥ ९ ॥

शषसा मुत्संज्ञा उक्ताः, मुत्संज्ञकेषु परभूतेषु विसर्जनीयः परसवर्णमापद्यते शाकटायनाचार्य्यस्य मतेन, यथा (१७अ॰ ३३क॰) आशुः शिशानः आशुश्शिशानः, (९अ॰ ३४क॰) अदितिः षोडशाक्षरेण अदितिष्षोडशाक्षरेण, (१अ॰ १क॰) देवो वः सविता देवो वस्सविता ॥

## अविकारꣳ शाकल्यः शषसेषु ॥ १० ॥

विसर्जनीयस्य विकारन्न मन्यते शाकल्यः शषसेषु परभूतेषु, यथा आशुः शिशानः आशुः शिशानः, अदितिः षोडशाक्षरेण अदितिः षोडशाक्षरेण, देवो व÷ सविता देवो व÷ सविता ॥

## प्रकृत्या कखयोः पफयोश्च ॥ ११ ॥

प्रकृत्या विसर्जनीयं मन्यते कखयोः पफयोश्च प्रत्यययोः शाकल्यः, कखयोर्भवति यथा (१२अ० ५क०) विष्णो॒ः क्रमं÷ विष्णो॒ः क्रम÷, (११अ० २२क०) तत॑÷ खनेम तत॑÷ खनेम, पफयोर्भवति यथा (८अ० १क०) दे॑व सवित॒ः प्रसु॑व दे॑व सवि॒तः प्रसु॑व, (१२अ० ८८क०) या॒ः फ॒लिनी॒ः या॒ः फ॒लिनी॒-र्या॒ऽअ॑फ॒लाः, कखयोः पफयोश्चेति पृथक्समासकरणमुत्तरार्थम्॥

## जिह्वामूलीयोपध्मानीयौ शाकटायनः ॥ १२ ॥

जिह्वामूलीयोपध्मानीयौ विसर्जनीय आपद्यते यथासंख्यम् कखयोर्जिह्वामूलीयमापद्यते पफयोस्तूपध्मानीयम् शाकटायनाचार्य्यस्य मतेन, कखयोर्यथा विष्णो॒ः क्रमं÷ विष्णो॒ः क्रमं÷, तत॑÷ खनेम तत॑÷ खनेम, पफयोर्यथा (१अ० २क०) वसो॑ः प॒वित्र॑म् वसो॑ः प॒वित्र॑म्, या॒ः फ॒लिनी॑ः या॒ः फ॒लिनी॒र्या॒ऽअ॑फ॒लाः॥

## लुङ्ङ्मुदि जित्परे ॥ १३ ॥

मुत्सं॑ज्ञकाः शषसाः, जित्सं॑ज्ञका द्वौ द्वौ प्रथमौ शषसाश्च, तत्र शषसेषु "प्रत्ययसवर्णमिति" विसर्जनीयसन्धिरुक्तः अत इह दशैव जित्संज्ञका गृह्यन्ते, लुक् लुप्यते विसर्जनीयो मुत्संज्ञके जित्परे परतः, यथा (३अ० २०क०) अन्धं॑÷ स्थ॒। अन्ध॒स्स्थान्धो॑ वो भक्षीय, (१८अ० २७क०) स्थाली॒भि॑÷ स्थाली॒ः। स्थाली॒भि॑स्स्थाली॒रा॑प्नोति, मुदि जित्पर इति किम् (२५अ० १८क०) स्व॒स्ति न॑÷ तार्क्ष्यो॑÷। स्व॒स्ति न॒स्ता-र्क्ष्यो॒ऽअरि॑ष्टनेमि॒ः स्व॒स्ति॥

## उपवसने पीवः ॥ १४ ॥

उपवसने प्रत्यये पीवशब्दसम्बन्धी विसर्जनीयो लुप्यते, यथा (२१अ० ४३क०) पीवः उपवसनानाम् पीवो पवसनानाम् ॥

## सऽओषधीमयोः ॥ १५ ॥

सपदसम्बन्धी विसर्जनीयो लुप्यते ओषधीमयोः प्रत्यययोः, ओषधी यथा (१२अ० ३६क०) सः।ओषधीः सौषधीरनुरुध्यसे, इम यथा (२९अ० ५४क०) सः। इमाम् सेमान्नो हव्यदातिं जुषाणः। ॥

## व्यञ्जने च ॥ १६ ॥

व्यञ्जने च प्रत्यये सपदसम्बन्धी विसर्जनीयो लुप्यते, यथा (३अ० २६क०) सः नः स नो बोधि श्रुधी हवम्, (१५अ० २८क०) सः जायसे मथ्यमानः, व्यञ्जन इति किम्, (१५अ० ४२क०) सः। अग्निः। सोऽअग्निर्यो वसुर्गणे ॥

## स्य एष च ॥ १७ ॥

स्यएषपदयोः सम्बन्धी विसर्जनीयो लुप्यते व्यञ्जनमात्रे, यथा (२२अ० १३क०) स्यः। रात्यः। एष स्य रात्यो वृषा, (९अ० १४क०) स्यः। वाजी एष स्य वाजी क्षिपणिम्, (२१अ० २६क०) एषः। छागः एष छागः पुरोऽश्वेन ॥

## निशब्दो बहुलम् ॥ १८ ॥

निशब्दः पदान्तीयो लुप्यते बहुलम्, शृङ्गा शृङ्गाणीति प्राप्ते यथा (१७अ० ९१क०) चत्वारि शृङ्गा त्रयोऽअस्य पादाः, पदा पदानीति प्राप्ते यथा (३४अ० ४३क०) त्रीणि पदा विचक्रमे, बहुलग्रहणात् क्वचिन्न च लोपो भवति, यथा (८अ० ४३क०) एता तेऽअघ्न्ये नामानि, क्वचिदिकारमात्रस्य

भवति, एमन् एमनीति प्राप्ते यथा (१३अ० ५३क०) एमन् आदयामि, क्वचिन्नकारमात्रस्य भवति दुष्कर्त्तारम् निष्कर्त्तारमिति प्राप्ते यथा (१२अ० ११०क०) दुष्कर्त्तारमहुरस्य, इत्थंभूतपदाद्यन्तप्रत्ययार्थं बहुलग्रहणम्॥

## अनितावध्याये॥ १९॥

अस्मिन्नध्यायशेषे येऽन्तःपद आगमा विकाराश्च वक्ष्यन्ते ते अनितौ इतिकरणे परत्रावस्थिते न भवन्तीति सूत्रार्थः। यथा (३अ० ५८क०) श्रेयस्कर श्रेयः करेति, (१अ० १६क०) चक्षुष्पाः चक्षुः पा इति, (३४अ० २०क०) स्वर्षाम् स्वः सामिति, (४अ० ३३क०) धूर्षाह्वौ धूः सह्वाविति, (३अ० ३६क०) दूडभः दुर्दभ इति, (३३अ० ११क०) वनर्षदः वनसद इति, (३०अ० १८क०) अवरस्पराय अवरपरायेति, (२८अ० ५५क०) दुदुक्षन् दुधुक्षन्निति, (१९अ० २क०) सुषाव सुसावेति, (११अ० ४४क०) पुरीषवाहनः पुरीषवाहनऽइति, (१७अ० ५५क०) मामहानः ममहानऽइति, (७अ० ४क०) वृष्टिमाँ२ऽइव वृष्टिमानिवेति, अध्यायशेष इति किम्, (११अ० १५क०) तवस्तरमिति तवः। तरम्, अत्रेतिकरणे परत्रावस्थितेऽपि सकारो विद्यत एव अस्यावधेः प्राग्भूतत्वात्॥

## इतिवच्चर्चायाम्॥ २०॥

इतिकरणात् पुरतो यत् पुनः पदवचनं तच्चर्चाशब्देनोच्यते तत्रेतिवत् इताविव। यथा इतिकरणे परत्रावस्थिते आगमविकाराश्च न भवन्ति एवमिहापि न भवन्ति। यथा श्रेयः कर, चक्षुः पाः। स्वः साम्, धूः सह्वौ, दुः दभः। वन सदः। अवरः पराय। सु चन्द्र। दुधुक्षन्। सुसाव। पुरीषवाहनः। ममहानः। वृष्टिमान् इव। एवं ह्याहुः "लोपागम-

विकारांश्च नैवेतिकरणे स्मृताः। अवग्रहस्तु चर्चायामितिना चोपदिश्यते ॥

## ककारपकारयोः सकारम् ॥ २१ ॥

विसर्जनीयोऽधिकृतः स यथादिष्टं ककारपकारयोः प्रत्ययोः सकारमापद्यते, यद्यप्यत्राविशेषेण सकार उक्तः तथापि कण्ठ्यपूर्वस्यैव सकारः, अकण्ठ्यपूर्वस्य तु षकारोऽभिप्रेतः, यतः "कृषोश्च कृधी सकारमिति" अकण्ठ्यपूर्वस्य सकारं विदधाति, अतोऽकण्ठ्यपूर्वस्य षकारो भवतीति निश्चीयते ॥

## भाव्युपधः षकारम् ॥ २२ ॥

अकण्ठ्यो भावीत्युक्तम् भाव्युपधो विसर्जनीयः षकारमापद्यते ककारपकारयोः प्रत्ययोः। कण्ठ्यपूर्वस्य तु सकार एव। एतयोरुदाहरणान्यग्रेतनसूत्रेषु द्रष्टव्यानि। अधिकारसूत्रमेतत् ॥

## आविर्निरिडइडाया वसतिर्वरिवः ॥ २३ ॥

आविः निः इडः इडायाः वसतिः वरिवः इति एतेषां विसर्जनीयः सकारं षकारं चापद्यते यथायोगं ककारपकारयोः प्रत्ययोः। यथा (१३अ० १३क०) आविः कृणुष्व, आविष्कृणुष्व, निः यथा (६अ० ३६क०) अस्मान्निष्कृसमरीर्विदाम्, इडः यथा (१५अ० ३ क०) इडस्पदे समिध्यसे, इडायाः यथा (४अ० २२क०) इडायास्पदमसि। वसतिः यथा (१२अ० ७९क०) पर्णो वो वसतिष्कृता, वरिवः यथा (५अ० ३७क०) अयन्नोऽग्निर्वरिवस्कृणोतु ॥

## दिवोऽककुत्पृथिव्योः ॥ २४ ॥

दिव इत्येतस्य सम्बन्धी विसर्जनीयः सकारमापद्यते ककुत्-

पृथिवीशब्दौ वर्जयित्वा। यथा (४अ० ३५क०) दिवः पृष्ठायं दिवस्पृष्ठाय सूर्याय, (१५अ० ६५क०) दिवस्पृष्ठे व्यचस्वतीम्, (१५अ० ५८क०) दिवस्पृष्ठे ज्योतिष्मतीम्, अककुत्पृथिव्योरिति किम्, (३अ० १२क०) अग्निर्मूर्द्धा दिवः ककुत्, (२९अ० ५३क०) दिवः पृथिव्याः पर्य्योजे ॥

## रायः सहसः पोषपुत्त्रयोः ॥ २५ ॥

रायः सहस इत्येतौ विसर्जनीयौ सकारमापद्येते यथासंख्यं पोषपुत्त्रयोः परयोः, रायः यथा (४अ० २२क०) रायः पोषेण, मा वयं रायस्पोषेण वि यौष्म, सहसः यथा (११अ० ७०क०) सहसः पुत्त्रः सहसस्पुत्त्रोऽअद्भुतः ॥

## तमसोऽपरस्तात् ॥ २६ ॥

तमस इत्ययं विसर्जनीयः सकारमापद्यते परस्ताच्छब्दं मुक्त्वा, यथा (१२अ० ७३क०) तमसः पारम् तमसस्पारमस्य, अपरस्तादिति किम् (३१अ० १८क०) आदित्यवर्णन्तमसः परस्तात् ॥

## तपसस्पृथिव्याम् ॥ २७ ॥

तपस इत्ययं विसर्जनीयः पृथिव्यां प्रत्यये सकारमापद्यते, यथा (३७अ० १६क०) धर्त्ता दिवो विभाति तपसस्पृथिव्याम्।

## अध्वनो रजसो रिषः स्पृशस्पातौ ॥ २८ ॥

अध्वनः रजसः रिषः स्पृशः एते विसर्जनीयाः पातौ प्रत्यये सकारमापद्यन्ते, अध्वनः यथा (३अ० १९क०) अध्वनः पातु पथोऽअध्वनस्पात्विन्द्राय। रजसः यथा (१७अ० ६०क०) रजसः पाति रजसस्पात्यन्तौ, रिषः यथा (१८अ० ७३क०) रिषः पातु स नो दिवा स रिषस्पातु नक्तम्, पाताविति धातु-

ग्रहणम् अत इहापि भवति, (३अ० ४८क०) देव ऽ रिषस्पाहि स्पृशः यथा (३७अ० ११क०) सरुस्पृशस्पाहि ॥

## अध्वनस्कुर्विति च ॥ २९ ॥

अध्वन इत्ययं विसर्जनीयः कुर्वित्येतस्मिंश्च प्रत्यये सकारमापद्यते, यथा (२६अ० १क०) सकामुँ ऽ२॥ अध्वनस्कुरु ॥

## समानपदे च ॥ ३० ॥

एकस्मिंश्च पदे यो विसर्जनीयः स ककारपकारयोः प्रत्ययोर्यथायोगं सकारं षकारं चापद्यते, यथा (१०अ० २८क०) श्रेयः कर श्रेयस्कर, भूयः कर भूयस्कर, (२२अ० १क०) आयुः पाः आयुष्पाः ॥

## परावसाने ॥ ३१ ॥

अवसानस्थे परीत्येतस्मिन् पदे प्रत्यये अधस्तनपदसम्बन्धी विसर्जनीयः सकारमापद्यते, यथा (१२अ० ९१क०) ओषधयः परि दिवऽओषधयस्परि, अवसान इति किम् (१३अ० ४५क०) तमग्ने हेडः परि ते वृणक्तु ॥

## कविष्करत्कृधिषु ॥ ३२ ॥

कविः करत् कृधि एतेषु च पदेषु प्रत्ययेषु अधस्तनपदसम्बन्धी विसर्जनीयः सकारं षकारं चापद्यते, कविः यथा (१५अ० ३३क०) वसुः कविः सऽइद्धानो वसुष्कविः, करत् यथा (३अ० ५८क०) यथा नो वस्यसः करत् यथा नो वस्यसस्करत्, कृधि यथा (४अ० १४क०) पुनः कृधि प्रबुधे नः पुनस्कृधि ॥

## कृषोश्च कृधौ सकारम् ॥ ३३ ॥

कृधौ च प्रत्यये कृषोरित्ययं विसर्जनीयः सकारमापद्यते,

यथा (४अ० १०क०) कृषीः कृधि समस्याः कृषीस्कृधि, ननु कविष्करत्कधिष्विति कृधौ कृषोरिति विसर्जनीयस्य सकारः प्राप्तः किमनेन सूत्रेण क्रियते एवन्तर्ह्यकण्ठ्योपधस्य षकारोऽभिप्रेतः स माभूदिति सकारविधानम् अस्माच्च ज्ञापकादकण्ठ्योपधः षकारमापद्यते इत्येतदध्यवस्यामः॥

## सदो द्यौर्नमस्कृतम्पितापथेषु॥ ३४॥

सदः द्यौः नमः एतेषां सम्बन्धी विसर्जनीयः यथासङ्ख्यं कृतं पिता पथ इत्येतेषु पदेषु प्रत्ययेषु सकारषकारावापद्येते, सदः यथा (१३अ० ८क०) येषामप्सु सदस्कृतम्, द्यौः यथा (२अ० ११क०) उपहूतो द्यौष्पिता, नमः यथा (१८अ० ५४क०) विश्वायुः शर्म सप्रथा नमस्पथे॥

## पतितालव्यस्वरोदये॥ ३५॥

पतिशब्दे तालव्यस्वरोदये प्रत्ययेऽधस्तनपदसम्बन्धी विसर्जनीयः सकारमापद्यते। यथा (५अ० ४५क०) वाचःऽ पतिम् वाचस्पतिं विश्वकर्माणमूतये, (३४अ० ५८क०) ब्रह्मणः पते ब्रह्मणस्पते त्वमस्य, (७अ० १क०) वाचःऽ पतये वाचस्पतये पवस्व॥

## पदे च॥ ३६॥

पतिशब्दे च पदे एतद्भवति न पदावयवे यथा (८अ० ४५क०) वाचःऽ पतिम्, पद इति किम् (२३अ० ६३क०) यतो जातः प्रजापतिः, (८अ० ५४क०) परमेष्ठ्यभिधीतः प्रजापतिः॥

## न परुषः परुषि॥ ३७॥

परुष इत्ययं विसर्जनीयः परुषि प्रत्यये न सकारमापद्यते,

यथा (१३अ० २०क०) परु॑षः परुषस्परि, समानपदे चेति प्राप्तस्य प्रतिषेधः ॥

## वाजपतिर्वासऽएदिधिषुरन्तःपर्शव्येनान्तः-पार्श्वमिति च ॥ ३८ ॥

वाजपतिः वासः एदिधिषुः अन्तःपर्शव्येन अन्तःपार्श्वम्-मित्येते विसर्जनीयाः यथाप्राप्तं न सकारषकारावापद्येते, (११अ० २५क०) वाजपतिः कविः "कविः करत्कधिष्विति" प्राप्तिः (३०अ० १२क०) वासः पल्पूलीम्, (३०अ० ९क०) एदिधिषुः पतिम्, "समानपदे च" इत्युभयोः प्राप्तिः अन्तःपर्शव्येन यथा (३९अ० ८क०) अन्तःपर्शव्येनोग्रम्, अन्तःपार्श्वम् यथा (३९अ० ९क०) अन्तःपार्श्वम्म् हाट्टेवस्य, "समान-पदे च" इत्युभयोः प्राप्तिः ॥

## अहः पतौ रेफम् ॥ ३९ ॥

अहरित्ययं विसर्जनीयः पतिशब्दे प्रत्यये रेफमापद्यते, यथा (९अ० २०क०) अहर्पतये स्वाहा, समानपद इति प्राप्ते सकारे तदपवादो रेफः ॥

## परस्य मूर्द्धन्यम् ॥ ४० ॥

इत उत्तरं लोपागमवर्णविकारान् वक्ष्यामः ते तावद्भवि-ष्यन्ति परस्य दन्त्यो मूर्द्धन्यमापद्यते अधिकारसूत्रमेतत् ॥

## स्वर्धूः साꣳसहयोः ॥ ४१ ॥

स्वः धूः एतौ विसर्जनीयौ रेफमापद्यते यथासंख्यं साꣳ-सहयोः प्रत्यययोः परस्य दन्त्यो मूर्द्धन्यमापद्यते। स्वः यथा (३४अ० २०क०) स्वः षाम् स्वर्षामप्सां वृजनस्य गोपाम्, धूः यथा (४अ० ३३क०) धूः षाहौ धर्षाहौ युञ्ज्येथाम् ॥

## उकारं दुर्दे ॥ ४२ ॥

दुरित्ययं विसर्जनीय उकारमापद्यते दकारे प्रत्यये उकारात्परस्य दन्त्यो मूर्द्धन्यमापद्यते। यथा (३अ० ३६क०) दुः दभ÷ परि ते दूडभो रथे÷ ॥

## नाशे च ॥ ४३ ॥

नाशे च प्रत्यये दुरित्ययं विसर्जनीय उकारमापद्यते उकारात्परस्य दन्त्यो मूर्द्धन्यमापद्यते। यथा दुः नाशः दूणाशः मृग्यमुदाहरणम् ॥

## पुरो दाशे ॥ ४४ ॥

पुर इत्ययं विसर्जनीयो दाशे प्रत्यये उकारमापद्यते परस्य मूर्द्धन्यम् यथा पुरः दाशः अत्र रूपसिद्धिः विसर्जनीयादेशस्योकारस्य चोपधाकारस्य च उवर्णे अकारमित्येकादेश ओकारः ततः परस्य दकारस्य डकारः, (१९अ० २०क०) पुरोडाशं हर्वीर्ण्या ॥

## अनसो वाहौ सकारो डकारम् ॥ ४५ ॥

अनश्शब्दः सान्तः तस्य वाही प्रत्यये सकारमापद्यते। यथा (२५अ० १३क०) अनस् वाहम् अनड्वाहमन्वारभामहे ॥

## उकारमितः सिञ्चतौ सोपधः ॥ ४६ ॥

इतः शब्दसम्बन्धी विसर्जनीय उपधासहित ओकारमापद्यते सिञ्चतौ प्रत्यये परस्य मूर्द्धन्यम्। यथा (१९अ०२क०) इतः सिञ्चत परीतो षिञ्चता सुतम् ॥

## षड्दशदन्तयोः सङ्ख्यावयोऽर्थयोश्च ॥४७॥

षडित्येतस्य शब्दस्य च शब्दादन्त्यो वर्णः सोपध ओकारमापद्यते परस्य मूर्द्धन्यं दशदन्तयोः प्रत्यययोर्यथासंख्यं संख्या-

वयसोरभिधायकयोः। यथा (१८अ० २५क०) षट् दश षोडश च मे, षट् दन्ता अस्येति षोडन्तः एतच्च शिष्यव्युत्पादनार्थं न हि संहितायामुदाहरणं लभ्यते ॥

## त आघादनाडम्बरात् ॥ ४८ ॥

आघाशब्दात्परस्तकारः परश्च मूर्द्धन्यमित्यनेन मूर्द्धन्यमापद्यते स चेदाघाशब्द आडम्बरशब्दात् परो न भवति। यथा (२४अ० ३५क०) दारु आघातः गोधा कालका दार्वाघाटः, अनाडम्बरादिति किम् (३०अ० १९क०) शब्दायाडम्बराघातम् ॥

## वनसदोऽवेटो रेफेण ॥ ४९ ॥

वनशब्दः सदशब्दे प्रत्यये रेफेण व्यवधीयते स चेद्वनशब्दो वेट्शब्दात् परो न भवति। यथा (३३अ० १क०) वनसदः वनर्षदो वायवो न सोमाः, अवेट् इति किम् (१७अ० १२क०) बर्हिषदे वेड्ड् नसदे वेट् ॥

## पत्यौ च सकारेण ॥ ५० ॥

पतिशब्दे च प्रत्यये वनशब्दः सकारेण व्यवधीयते, यथा (२९अ० ३५क०) वनपतिः वनस्पतिः शमिता देवः ॥

## ऋतावरौ च पतिपरयोः ॥ ५१ ॥

ऋतः अवरश्च शब्दौ सकारेण व्यवधीयेते यथासङ्ख्य पतिपरयोः प्रत्यययोः, यथा (२७अ० ३४क०) ऋतपते ऋतस्पते त्वष्टुर्जामातरद्भुत, (३०अ० १९क०) अवरपराय अवरस्पराय शङ्खधम् ॥

## तद्बृहतौ करपत्योस्तलोपश्च ॥ ५२ ॥

तत् बृहत् एतौ करपतिशब्दयोः प्रत्यययोर्यथासङ्ख्य

सकारेण व्यवधीयेते पूर्वपदयोश्च तकारलोपो भवति। यथा (११अ० ७८क०) तत् करान् तस्क राँ २॥ऽभुत्, (२५अ० १९क०) बृहत् पतिः बृहस्पति + ॥

## परिष्कृते षकारेण ॥ ५३ ॥

परीत्येतत्पदं कृते प्रत्यये षकारेण व्यवधीयते, यथा (२१अ० ४२क०) परिकृताः परिष्कृताः शुक्राःऽ ॥

## चन्द्रे सु शकारेण ॥ ५४ ॥

चन्द्रे प्रत्यये सुशब्दः शकारेण व्यवधीयते। यथा (१५अ० ४३क०) सुचन्द्र उभे सुश्चन्द्र सर्पिष + ॥

## दुधुचन्धो दकारम् ॥ ५५ ॥

दुधुचन्नित्येतस्य शब्दस्य धकारो दकारमापद्यते, यथा (३३अ० २८क०) दुधुचन् सहस्रधाराम्बृहतीन्दुदुचन् ॥

## भाविभ्यः सः षठं० समानपदे ॥ ५६ ॥

अकण्ठ्यो भावीत्युक्तम् भाविभ्य उत्तरः सकारः षकारमापद्यते एकपदस्थौ चेन्नाविसकारौ भवतः, यथा (१अ० २५क०) गोस्थानम् व्रजङ्गच्छ गोष्ठानम्, (८अ० ५४क०) परमेस्थौ परमेष्ठ्यभिधीतः, (१९अ० २क०) सुषाव सोमम्, (२५अ० ४६क०) सोसधाम सोषधामेन्द्रस्य, भाविभ्य इति किम् (९अ० २क०) ध्रुवसदन्त्वा, समानपद इति किम् (१२अ० ३क०) वि सोमतः सुरुचं + ॥

## अनुस्वाराच्च तत्पूर्वात् ॥ ५७ ॥

अनुस्वाराच्च परः सकारः षकारमापद्यते, भाविपूर्वात् यथा (१३अ० ९क०) तपूंष्यग्ने, (१९अ० २०क०) पुरोडाशै-

र्हवीᳪंषा, तत्पूर्वादिति किम् (१७अ० ४२क०) उत्सक्थ्योंर्ना-
म्नामुकानाम्मनाᳪंसि ॥

## करेफाभ्याञ्च ॥ ५८ ॥

ककाररेफाभ्यां च परः सकारः षकारमापद्यते, ककारा-
न्तवति यथा (१६अ० ६क०) दिक् सु ये चैनᳪं रुद्राऽअभितो
दिक्षु, ऋक् सु ऋक्षु, रेफान्तवति यथा (२३अ० १क०) गीः
सु गीर्षु, धूः सु धूर्षु, ननु च यत्र पदकारोऽन्यथाभूतं पदं
करोति अन्यथा चार्षसंहिता तत्रैव लक्षणं कर्त्तुं युज्यते, यथा
सुसाव सुषाव, यत्र पुनः पदकारस्य चार्षसंहितायाश्च समान-
वाक्यत्वं तत्र लक्षणं न घटते व्याकरणस्य विषयः सत्यमेव यदि
नाम प्रसङ्गमुपजीवदाचार्य्येण शिष्यव्युत्पत्त्यर्थं कश्चिद्व्याकरण-
लक्षण इहाश्रितः एवं संहितायामविद्यमानेषु लक्षणं द्रष्ट-
व्यम्, अथवा यथा एधाहारस्य मध्वाहरणमुदकाहारस्य मत्स्या-
हरणं पुष्पाहारस्य फलाहरणम् एवमेतदपि एवं च कृत्वा
अदोष एवेति ॥

## नेः सीदतेः ॥ ५९ ॥

नेः परस्य सीदतेः सकारः षकारमापद्यते । यथा (७अ०
३४क०) नि सीदत एदं बर्हिर्निषीदत ॥

## ससाद च ॥ ६० ॥

नेःपरस्य ससादशब्दस्य सकारः षकारमापद्यते, यथा
(१०अ० २७क०) नि ससाद नि षसाद धृतव्रतः, असमान-
पदार्थ आरम्भः ॥

## ओकारात्तु ॥ ६१ ॥

ओकारात्पदात्परः सुसकारः षकारमापद्यते, यथा (३अ० ४६क०) मा सुनः मा षूणं ॥

## ऊश्चापृक्तात् ॥ ६२ ॥

एकवर्णं पदमपृक्तमित्युक्तम् ऊकाराच्चापृक्तसंज्ञात्परः सुसकारः षकारमापद्यते, यथा (११अ० ४२क०) ऊँ इति ऊ सु नः ऊर्ध्वऽऊषुणं ॥

## अभेश्च ॥ ६३ ॥

अभेरुपसर्गाच्च परः सुसकारः षकारमापद्यते, यथा (२६अ० ६क०) अभि सु नः अभीषुणः सखीनाम् ॥

## परेश्च सिञ्चतेः ॥ ६४ ॥

परेरुपसर्गाच्च परः सिञ्चतेः सकारः षकारमापद्यते, यथा (१८अ० २८क०) परि सिञ्चन्ति ॥

## अभेश्च ॥ ६५ ॥

अभेरुपसर्गाच्च परः सिञ्चतेः सकारः षकारमापद्यते संहितायाम्, यथा (८अ० ३०क०) अभि सिञ्चामि अभिषिञ्चाम्यसौ ॥

## अव्यवहितोऽपि ॥ ६६ ॥

अकारव्यवहितोऽप्यभेरुत्तरः सिञ्चतेः सकारः षकारमापद्यते संहितायाम्, यथा (१०अ० १क०) अभ्यसिञ्चन् याभिर्मित्रावरुणावभ्यषिञ्चन् ॥

## वेर्युदयः ॥ ६७ ॥

वेरुपसर्गात्परः सकारो यकारोदयः षकारमापद्यते, (१२अ० ६५क०) विस्यामि तन्ते विष्याम्यायुषो न मध्यात्

यकारोदय इति किम् (७अ० ४५क०) विष्णुः पश्यद्यन्तरिक्षम् ॥

## हेर्मिथोदयः ॥ ६८ ॥

हिशब्दात् परः सकारो मकारोदयो वा यकारोदयो वा षकारमापद्यते, मकारोदयो यथा ( ३अ० ४६क० ) हि स्म अस्ति हि ष्मा ते शुष्मिन्नवयाः), यकारोदयो यथा (११अ० ५०क०) हि स्था आपो हि ष्ठा मयोभुवः ॥

## द्यवेश्च ॥ ६९ ॥

द्यविशब्दाच्च परः सकारः षकारमापद्यते यथासम्भवं मकारोदयः यकारोदयश्च संहितायाम्, यथा (३३अ० ५३क०) द्यवि स्थ ये ऽअन्तरिक्षे ऽयऽउप द्यविष्ठ ॥

## नेः स्त्यास्तनोः ॥ ७० ॥

नेरुपसर्गात् परयोः स्त्यास्तन्योर्धात्वोः सकारः षकारमापद्यते संहितायाम्, यथा (६अ० १५क०) निः स्त्यायताम् आप्यायतान्निष्ट्यायताम्, निस्तनिहि (२९अ० ५६क०) निष्टनिहि दुरिता बाधमानः ॥

## ततक्षौ ॥ ७१ ॥

ततक्षुरित्येतस्मिन्नुत्तरपदे निरुपसर्गसम्बन्धिविसर्जनीयसकारः षकारमापद्यते। यथा (१७अ० ८२क०) निः ततक्षुः स्वधया निष्टतक्षुः ॥

## अनोः स्तुवन्त्याम् ॥ ७२ ॥

अनोरुपसर्गात् परः स्तुवन्तिसकारः षकारमापद्यते। यथा (२३अ० ८७क०) अनु स्तुवन्ति अनुष्टुवन्ति पूर्वथा ॥

## दुष्वप्न्यम् ॥ ७३ ॥

निपातनसूत्रमेतत् भाविभ्य उत्तरस्य सकारस्य षत्वमित्युक्तं समानपदे इह तु विसर्जनीयेन व्यवधानान्न प्राप्नोति अतः षत्वं निपात्यते संहितायाम्, यथा (३५अ॰ ११क॰) दुःष्वप्न्यम् अप दुःष्वप्न्यꣳ सुव ॥

## वन्दारुर्माकिः ॥ ७४ ॥

वन्दारुः माकिः अनयोर्विसर्जनीयस्य सकारः षकारमापद्यते संहितायाम्, तथयोः समिति विसर्जनीयस्य सकार उक्तस्तस्यैव षत्वम्, यथा (१२अ॰ ४२क॰) वन्दारुः ते वन्दारुष्टे तन्वं वन्दे अग्ने, (१३अ॰ ११क॰) माकिः ते माकिष्टे व्यथिरादधर्षीत् ॥

## सहेः पृतनायाः ॥ ७५ ॥

एतदपि निपातनसूत्रम् अभाविपूर्वत्वात् षकारो न प्राप्नोति स निपात्यते। यथा (१८अ॰ ६८क॰) पृतनासाह्याय च पृतनाषाह्याय च ॥

## सधिरꣳशुरदितिः ॥ ७६ ॥

सधिः अꣳशुः अदितिः एतेषां विसर्जनीयसकारः षकारमापद्यते संहितायाम्, सधिः यथा (१२अ॰ ३६क॰) सधिः तव सधिष्टव सौषधीः, अꣳशुः यथा (५अ॰ ७क॰) अꣳशुः ते अꣳशुष्टे देव सोम, अदितिः यथा (११अ॰ ६१क॰) अदितिः त्वा अदितिष्ट्वा देवी ॥

## वायुरग्निरग्नेरेकाक्षरे ॥ ७७ ॥

वायुः अग्निः अग्नेः एतेषां विसर्जनीयसकारः षकारमापद्यते एकाक्षरे पदे प्रत्यये, यथा (१४अ॰ १४क॰) वायुः ते वायुष्टेऽधिपतिः, (१३अ॰ २४क॰) अग्निः ते अग्निष्टेऽधिपतिः,

(२अ० ११क०) अग्नेः) त्वा अ॒ग्नेष्ट्वास्ये॑न, एकाक्षर इति किम् (१७अ० १६क०) अग्निः तिग्मेन अ॒ग्निस्ति॒ग्मेन॑ शोचिषा॑, (१अ० १५क०) अग्नेः तनूः अ॒ग्नेस्त॒नूर॑सि ॥

## सकारपरे च ॥ ७८ ॥

सकारः परो यस्मादेकाक्षरात् स तथोक्तः तस्मिन्नेकाक्षरे प्रत्यये च शब्दादधस्तनपदसम्बन्धो विसर्जनीयसकारः षकारमापद्यते संहितायाम्, यथा (४अ० २१क०) बृहस्पतिः त्वा सुम्ने बृ॒ह॒स्पति॑ष्ट्वा सु॒म्ने, (१३अ० १७क०) प्रजापतिः त्वा सादयतु प्र॒जाप॑तिष्ट्वा सादयतु, सकारपर इति किम् (२अ० ८क०) विष्णु॒स्त्वा क्रमताम् (१अ० ३१क०) स॒वि॒तुस्त्व॑ा प्रस॒वे ॥

## मातृभिरर्चिभिः पायुभिर्वरूत्रीः ॥ ७९ ॥

मातृभिः अर्चिभिः पायुभिः वरूत्रीः एतेषां च पदानां विसर्जनीयसकारः षकारमापद्यते एकाक्षरे प्रत्यये, मातृभिः यथा (१२अ० ३८क०) मातृभिः त्वम् मा॒तृभि॒ष्ट्वम्, अर्चिभिः यथा (१२अ० ३२क०) अर्चिभिः त्वम् अ॒र्चिभि॒ष्ट्वम्, पायुभि-र्यथा (३३अ० ६८क०) पायुभिः त्वम् पा॒युभि॒ष्ट्वम्, वरूत्रीः यथा (११अ० ६१क०) वरूत्रीः त्वा वरू॑त्रीष्ट्वा दे॒वीः) ॥

## षात्तथौ मूर्द्धन्यम् ॥ ८० ॥

षकारात्परः तकारथकारौ मूर्द्धन्यमापद्यते विकारौ यथा सङ्ख्यमिति परिभाषितत्वात् तकारस्य टकारः थकारस्य ठकारः, यथा (११अ० ६१क०) वरू॑त्रीष्ट्वा (२अ० १क०) कृष्णो॑ऽस्या-खरे॒ष्ठः ॥

## प्रकृत्या नानापदस्थे तकारे ॥ ८१ ॥

इत उत्तरं प्रकृत्या सकारो भविष्यति समानपदस्थः

नानापदस्थस्तु यः प्रकृतिभावः स तकारे प्रत्येतव्यः। अपवादसूत्रमेतत्॥

अनुसन्तनोतु बृहस्पतिसुतस्य सुसमिद्धाय सुसन्दृशमभिसत्त्वाऽभिसंविशन्तु सुसस्याऽअतिस्थूलम्मुसलेपत्नीसँय्याजान् ऋतुस्थलाञ्जिसक्थो दिविस्पृशा हृदिस्पृशꣳ हिꣳसीर्ऋक्सामयोर्ऋक्सामाभ्यान्तित्तिरिः सीसेन सीसाः सीसम्पशुसनिगोसनि प्रतिसद्दङ् प्रतिसद्दाचासश्चतुस्त्रिꣳशत्॥ ८२॥

अनुसन्तनोतु बृहस्पतिसुतस्य सुसमिद्धाय सुसंदृशम् अभि सत्त्वा अभि संविशन्तु सुसस्याः अतिस्थूलम् मुसले पत्नीसंयाजान् ऋतुस्थला अञ्जिसक्थः दिविस्पृशाः हृदिस्पृशम् हिꣳसीः ऋक्सामयोः ऋक्सामाभ्याम् तित्तिरिः सीसेन सीसा सीसम् पशुसनि गोसनि प्रतिसद्दङ् प्रतिसद्दाचासः चतुस्त्रिꣳशत् एते सकाराः प्रकृत्या भवन्ति सकारः षकारं प्राप्नोति स निषिध्यत इति सूत्रार्थः, इदानीमुदाहरणानि दीयन्ते। अनुसन्तनोतु यथा इदमग्ने कर्मेदं वीर्य्यम्पत्नीऽनुसन्तनोतु, बृहस्पतिसुतस्य यथा (८अ० ६क०) बृहस्पतिसुतस्य देव, सुसमिद्धाय यथा (३अ० २क०) सुसमिद्धाय शोचिषे, सुसन्दृशम् यथा (३अ० ५२क०) सुसन्दृशन्त्वा वयम्, अभि सत्वा यथा (१७अ० ३७क०) अभि वीरोऽअभि सत्त्वा सहोजाः, अभि संविशन्तु यथा (१३अ० २५क०) इन्द्रमिव देवाऽअभि संविशन्तु, सुसस्याः यथा (४अ० १०क०) सुसस्याः कृषीस्कृधि, अतिस्थूलम् यथा (३०अ० २२क०) अतिस्थूलञ्चातिकृशञ्च,

मुसले यथा उलूखलमुसले, पत्नीसँय्याजान् यथा (१९ अ० २९ क०) ग्रुँव्यन्ना पत्नीसँय्याजान्, क्रतुस्थला यथा (१५ अ० १५ क०) पुञ्जिकस्थला च क्रतुस्थला च, अञ्जिसक्थो यथा (२४ अ० ४ क०) शितिकक्षो᳚ऽञ्जिसक्थः, दिविस्पृशा यथा (१५अ० २७क०) घृतप्रतीको बृहता दिविस्पृशा, हृदिस्पृशम् यथा (१५अ० ४४क०) क्रतुन्न भद्रꣳ हृदिस्पृशम्, एतेषां पदानां सकारो भाव्युपधत्वात् षत्वं प्राप्नोति तस्यैतेन प्रकृतिभावः, हिꣳसीः यथा (४अ० १क०) स्वधिते मैनꣳ हिꣳसीः अनुस्वाराच्च तत्पूर्वादिति प्राप्तिः, ऋक्सामयोः यथा (४अ० ९क०) ऋक्सामयोः शिल्पे ऋक्सामाभ्याꣳ सन्तरन्तः, करेफाभ्याञ्चेति प्राप्तिः, तित्तिरिः यथा (२४अ० ३६क०) तित्तिरिस्ते सर्पाणाम्, एकाक्षरे सकारपरे चेति प्राप्तिः, इदमर्थेन च नानापदस्थे तकार इति सूत्रावयवः कृतः अन्यथातित्तिरिपदे सकारो न विद्यत इति मोहः स्यात्, सीसेन यथा (१९अ० ८०क०) सीसेन तन्त्रं मनसा, सीसाः यथा (२३अ० ३७क०) रजता हरिणीः सीसायुजो युज्यन्ताम्, सीसम् यथा (१८अ० १३क०) सीसञ्च मे, पशुसनि यथा (१९अ० ४८क०) प्रजासनि पशुसनि, गोसनिर्यथा (८अ० १२क०) यो गोसनिस्तस्यऽत इष्टयजुषः। प्रतिसद्दङ् यथा (१७अ० ८१क०) सद्दङ् च प्रतिसद्दङ् च, प्रतिसद्दक्षासः यथा (१९अ० ८४अ०) प्रतिसद्दक्षासऽएतन्न, चतुस्त्रिꣳशत् यथा (२५अ० ४१क०) चतुस्त्रिꣳशद्वाजिनः, न चात्र भाविविसर्जनीयव्यवहितः अतो नैवेह षत्वशङ्का किमनेन सूत्रावयवेनेति एवन्तर्हि येऽन्येऽपि चतुःशब्दविसर्जनीयव्यवहितास्तेषां षत्वार्थम्। (१४अ० २४क०) यथा चतुः स्तोमः चतुष्टोमः॥

## ऋकाररेफाउदयस्य ॥ ८३ ॥

ऋकारोदयः रेफोदयः अउदयस्य सकारः प्रकृत्या भवति, ऋकारोदयः यथा (१४अ० २८क०) तिसृभिरस्तुवत, रेफोदयः यथा (१७अ० २४क०) तिस्रश्चमे, अउदयः यथा (१अ० १५क०) वाचो विसर्जनम् ॥

## पृथिविदिव्युपरिचर्षणिशकुनियासिभ्यः ॥८४॥

पृथिवि दिवि उपरि चर्षणि शकुनि यासि एतेभ्यो भाविभ्यः परः सकारः प्रकृत्या भवति संहितायाम्, पृथिवि यथा (८अ० २क०) पृथिवि सदन्त्व, दिवि यथा (८अ० २क०) दिवि सदन्त्व सदम्, उपरि यथा (८अ० ३६क०) उपरि सतो दुवस्यन्तः, चर्षणि यथा (२८अ० १क०) चर्षणीसहा वेत्तु, शकुनि यथा (२५अ० ३क०) शकुनि सादेन, यासि यथा (२१अ० ३क०) अवयासि सिसीष्ठाः ॥

## ऋषरेभ्यो नकारो णकारः समानपदे ॥८५॥

ऋकारषकाररेफेभ्य उत्तरो नकारो णकारमापद्यते समानपदे, ऋकाराद्भवति यथा (११अ० २७क०) नृणाम्, षकाराद्भवति यथा (१अ० १०क०) पूष्णः, रेफाद्भवति यथा (३अ० ४८क०) पूर्णा, एते प्रत्ययनकाराः ऋषरेफेभ्य उत्तराः सन्तो णकारमापद्यन्ते, अयं तावत् सूत्रार्थो व्याकरणविषयप्रदर्शनार्थं क्रियते ॥

## स्वरयवहकपैश्च ॥ ८६ ॥

स्वरैर्यकारवकारहकारैः कवर्गपवर्गाभ्याञ्च व्यवहितो नकारः ऋषरेभ्य उत्तरो णकारमापद्यते संहितायाम्, यथा (१२अ० २८क०) नृमनाः तृतीयमप्सु नृमणाः, (११अ०

४४क०) पुरीषवाहनः अग्ने ऽपुरीषवाहणः, (५अ० ३१क० प्रवाहनः विभूरसि प्र_वाहणः, ऋषरेभ्य इति किम् (५अ० ३१क०) वह्निरसि हव्यवाहनः, समानपद इति किम् (९अ० २९क०) प्र नो यच्छत्वर्यमा ॥

निषस्थाय रथवाहणमिन्द्रऽएणम्परिणीयते समिन्द्रणऽउरुष्याणो रक्षाणः षूणः षुणः षुणासत्या स्वर्णास्यूरि णौ प्रणऽआयूꣳषि ॥८७॥

निषस्थाय रथवाहणम् इन्द्र एणम् परिणीयते समिन्द्रणः उरुष्याणः रक्षाणः षूणः षुणः षुणासत्या स्वर्ण अस्यूरि णौ प्रणऽआयूꣳषि एते च णकारा निपात्यन्ते यदत्र लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम्। यथा निषस्थाय अत्र द्वयोर्नकारयोर्णत्वं निपात्यते प्रथमस्य तवर्गे चेति निषेधः उत्तरस्य तु नकारव्यवहितत्वात् नकारस्य स्वरयवहकपां मध्ये न पठ्यते, (२२अ० ८क०) निषस्थाय स्वाहोत्थिताय, रथवाहणं यथा (२९अ० ४५क०) रथवाहनम् थकारेण व्यवधानादप्राप्तिः अतो निपात्यते रथवाहणꣳ हविरस्य नाम, इन्द्रऽएणम् यथा (२९अ० १३क०) इन्द्रऽएनम् इतऽउत्तरमसमानपदत्वादप्राप्तं णत्वं निपात्यते। इन्द्रऽएणं प्रथमोऽअध्यतिष्ठत्, परिणीयते यथा (२३अ० ७४क०) परिनीयते सोऽअध्वराय परिणीयते कविः), समिन्द्रणः यथा (८अ० १५क०) इन्द्र नः समिन्द्र णो मनसा नेषि गोभिः, उरुष्याणः यथा (३अ० २७क०) उरुष्यानः उरुष्याणोऽअघायतः) समस्मात्, रक्षाणः यथा (३अ० २९क०) रक्ष नः रक्षाणो ब्रह्मणस्पते, षूणः यथा (३अ० ४६क०) षू नः मोषूणऽइन्द्रात्र, षुणः यथा (२७अ० ४१क०) अभीषु नः अभीषु णः सखीनाम्, षुणा यथा (२०अ० ८१क०) गोमदूषु नासत्या

गोर्मदधुर्णा सन्त्वा, स्वर्ण यथा (१८अ० ५०क०) स्वः न स्वर्णं घर्मः स्वाहा, अस्थूरि णौ यथा (२अ० २७क०) अस्थूरि नौ अस्थूरि णौ गार्हपत्यानि सन्तु, प्रण आयूंषि यथा (२३अ० ३१क०) प्र नः आयूंषि प्रण आयूंषि तारिषत्, आयूंषीति किम् (३४अ० ३६क०) भग प्र नो जनय गोभि-॥

## परिणऽइति शाकटायनः॥ ८८॥

परिण इति निपात्यते शाकटायनाचार्य्यस्य मतेन, यथा परि नः परिणो रुद्रस्य हेतिःऽ, शाकटायन इति किम् (१६अ० ५०क०) परि नो रुद्रस्य हेतिःऽ॥

## प्र नेतिनुदातिहिनोमीनाम्॥ ८९॥

प्रपूर्वाणाम् नेति नुदाति हिनोमि एषां शब्दरूपाणां नकारो णकारमापद्यते संहितायाम्, अत्र नेतिनुदात्योर्धातुग्रहणमतः सर्वप्रत्ययान्तयोर्भवति हिनोतेस्तु विकरणनिर्देशाद्यत्र विकरणं तत्रैव भवति, नेति यथा (११अ० ८क०) प्र नय प्रणय देवाव्यम्, नुदाति यथा (१५अ० १क०) प्र नुदानः अग्ने जातान् प्रणुदानः, हिनोमि यथा (३५अ० १९क०) प्रहिनोमि क्रव्यादमग्निं प्रहिणोमि॥

## प्रकृत्या पदान्तीयः॥ ९०॥

पदान्तीयो नकारो हल् प्रकृत्या भवति, समानपद इति प्राप्तिः, यथा (१९अ० ७०क०) पितॄन् हविषेऽअत्तवे, (३४अ० ४१क०) पूषन्तव व्रते वयम्, (३अ० ४७क०) अक्रन् कर्म कर्मकृतः॥

## निवनिनसः प्रपीनम्॥ ९१॥

नि वनि नसः प्रपीनम् एते नकाराः प्रकृत्या भवन्ति, समानपद इति प्राप्तिः। नि यथा (२४अ० १८क०) कृष्णा

बभ्रुणीकाशाः, वनि यथा (१अ० १७क०) ब्रह्मवनिं त्वा क्षत्रवनिं, नमः यथा (२४अ० ३८क०) वार्ध्रीनसस्ते मत्स्या परस्वाय, प्रपीनम् यथा (१७अ० ७८क०) अपामपीनमग्ने ॥

अ्यीमनाऽइत्येके ॥ ८२ ॥

अयञ्च नकारः प्रकृत्या भवति एकेषामाचार्य्याणाम्मतेन, यथा (१७अ० ५७क०) अयीमनाः शतपयाः, एकेषामिति किम् अयीमणाः शतपयाः ॥

इन्द्राग्नी चित्रभानो वार्त्रघ्नन्दुःष्वप्न्यम् भुवयोनिः पुरोऽनुवाक्याभिः पुरोऽनुवाक्याश्चर्मन्नम् ॥ ८३ ॥

इन्द्राग्नी चित्रभानो वार्त्रघ्नम् दुःष्वप्न्यम् भुवयोनिः पुरोऽनुवाक्याभिः पुरोऽनुवाक्याः चर्मन्नम् एते च नकाराः समानपद इति प्राप्तणकाराः प्रकृत्या भवन्ति, इन्द्राग्नी यथा (२अ० १५क०) इन्द्राग्न्योरुज्जितिम्, चित्रभानो यथा (२०अ० ८७क०) इन्द्रायाहि चित्रभानो, वार्त्रघ्नम् यथा (८अ० ८क०) इन्द्रस्य वार्त्रघ्नमसि, दुःष्वप्न्यम् यथा (३५अ० ११क०) अप दुःष्वप्न्यᳬ सुव, भुवयोनिर्यथा (१४अ० १क०) ध्रुवक्षितिर्भुवयोनिः, पुरोऽनुवाक्याभिः यथा (२०अ० १२क०) ऋचं पुरोऽनुवाक्याभिः, पुरोऽनुवाक्याः यथा (२०अ० १२क०) पुरोऽनुवाक्या याज्याभिः, चर्मन्नम् यथा (३०अ० १५क०) साध्येभ्यश्चर्मन्नम् ॥

तवर्गे च ॥ ८४ ॥

तवर्गे च प्रत्यये ऋषरेफेभ्य उत्तरो नकारः प्रकृत्या भवति,

यथा (७अ० १५क०) तृम्पन्तु होत्राः, (२५अ० १क०) अवक्रन्देन तालु ॥

## षादनन्तरऋकारे ॥ ९५ ॥

षकारादनन्तरो नकारऋकारे प्रत्यये प्रकृत्या भवति, यथा (३३अ० ८०क०) उग्रस्त्वेष नृम्णः ॥

## शिलिसिवर्गमध्यमव्यवहितोऽपि ॥ ९६ ॥

शकारलकारसकारव्यवहितः वर्गाश्च ते मध्यमाश्च वर्गमध्यमाः चटतवर्गाः तैश्च व्यवहितो नकारऋषरेभ्य उत्तरः प्रकृत्या भवति, शकारव्यवहितो यथा (१२अ० १क०) दृशानो रुक्मः, (५अ० ३२क०) सम्राडसि कृशानुः, लकारव्यवहितः यथा (२५अ० २क०) निर्ऋतिर्निर्जल्येन, सकारव्यवहितः यथा (१९अ० ९४क०) अपाᳪ रसेन वरुणः, चवर्गव्यवहितः यथा (२०अ० ४२क०) प्राचीनं ज्योतिः, (३अ० ७क०) अन्तश्चरति रोचना, टवर्गव्यवहितः यथा (११अ० ९क०) त्रैष्टुभेन छन्दसा, (११अ० ११क०) आनुष्टुभेन छन्दसा, तवर्गव्यवहितो यथा (२९अ० ५७क०) रथिनो जयन्तु, (१०) आर्त्नी इमे, ननु शिलिसिवर्गमध्यमव्यवहितोऽपीत्यनेन सूत्रेण एतैर्वर्णैर्व्यवहितऋषरेफेभ्य उत्तरो नकारः प्रकृत्या भवति समानपद इत्युक्तम्, तथा "ऋषरेफेभ्यो नकारो णकारᳪ समानपदे" "स्वरयवहकपेषु" इत्यनेन एतैर्वर्णैर्व्यवहितोऽपि नकारो णकारमापद्यते समानपदे इत्युक्तम्, एवं य एव स्वरयवहकपव्यतिरिक्ता वर्णास्त एव शिलिसिवर्गमध्यमाः अतोऽनेन सूत्रेण न प्रयोजनम् एवन्तर्ह्युभयथा लक्षणानुकथनं शिष्यबुद्धिव्युत्पादनार्थम् ॥

## दीर्घम् ॥ ९७ ॥

विसर्जनीय इत्युपक्रम्य द्वयोर्व्यञ्जनयोः सन्धौ ये लोपागमवर्णविकारास्ते प्रतिपादिताः, अधुना स्वरस्य व्यञ्जनेन सह सन्धौ यः स्वरविकारः स उच्यते ह्रस्वः स्वरो दीर्घविकारमापद्यते अधिकारसूत्रमेतत् ॥

**अश्वरश्मिमतिसुमतिस्वसुतचारयघृणिसेदिमेन्द्रियधारयचित्रभङ्गुरवयुनाश्वस्यहृदयघुष्यत्र्त्ताभ्यवताध्यर्चशक्तिपुरुशचि वकारे ॥ ९८ ॥**

अश्व रश्मि मति सुमति स्व सुत चारय घृणि सेदिम इन्द्रिय धारय चित्र भङ्गुर वयुन अश्वस्य हृदय घुष्य ऋत अभि अवत अधि अर्च शक्ति पुरु शचि एते ह्रस्वस्वरा वकारे प्रत्यये दीर्घमापद्यन्ते, अश्व यथा (१२अ० ८१क०) अश्वावतीᳬ सोमावतीम्, रश्मि यथा (१५अ० ६३क०) रश्मीवती भास्वतीम्, मति यथा (२२अ० १२क०) प्रदेवाय मतीविदे, सुमति यथा (२२अ० १२क०) सुष्टुतिᳬ सुमतीवृधः, स्व यथा (२४अ० ३३क०) स्वाविङ्कुर्मी, सुत यथा (२०अ० ८८क०) विप्रजूतः सुतावतः, चारय यथा (२३अ० २१क०) समुञ्जिश्चारया वृषन्, घृणि यथा (२४अ० ३९क०) उष्ट्रो घृणीवान्। सेदिम यथा (२५अ० १५क०) देवानाᳬ सख्यमुपसेदिमा वयम्। इन्द्रिय यथा (६अ० २७क०) इन्द्रियावान्मदिन्तमः। धारय यथा (६अ० ८क०) इडस्पते धारया वसूनि, चित्र यथा (३अ० १८क०) चित्रावसो स्वस्ति ते पारमशीय, भङ्गुर यथा (११अ० २६क०) हन्तारम्भङ्गुरावताम्। वयुन यथा (५अ० १४क०) विहोत्रा दधे वयुनाविदेकः। अश्वस्य यथा (२५अ० ४२क०) एकस्त्वष्टुरश्वस्या विशस्ता, हृदय यथा (८अ० २३क०) ऋतापवक्ता हृदया विधश्चित्, घुष्य यथा

(२५अ० ४१क) परु॑ष्परुरनुघुष्या॒ विश॑स्त, ऋत यथा (१२अ० १११क०) ऋ॒तावा॑नम्महि॒षम्, अभि यथा (१४अ० २३क०) अ॒भीव॒र्त्तः ऽ स॑वि॒तृँ० भो वर्चो॑ द्राविणम्), अवत यथा (१२अ० ८८क०) इ॒दम्मे॒ प्राव॑ता॒ वच॑ः, अधि यथा (२५अ० ३९क०) अ॒धीवा॒सँय्या॒ हिर॑ण्यान्यस्मै, अर्च यथा (२३अ० २३क०) अर्च॑ा वि॒श्वान॑राय वि॒श्वा भुवे॑, शक्ति यथा (२९अ० ४६क०) कृ॒च्छ्रे श्रि॒तः शक्ती॑वन्तो ग॒भीरा॑ः, पुरु यथा (३३अ० ८१क०) इ॒मा-ऽउ॑ त्वा पुरूवसो। शचि यथा शचीवसे॥

## नाश्ववद्विरण्यात् ॥ ९९ ॥

अश्ववदित्येतत्पदत्र दीर्घमापद्यते हिरण्यशब्दाद्यदि परं भवति, यथा (८अ० ६३क०) आपं॑वश्व हि॒र॑ण्यव॒दश्व॑वत्॥

## अभि विश्वेषँ वीर विश्व वत्स इव वाजयन्तेषु ॥ १०० ॥

अभीत्येतत्पदं विश्वेषम् वीर विश्व वत्स इव वाजयन्त इत्येतेषु न दीर्घमापद्यते। विश्वेषं यथा (१अ० ११क०) स्व॑रभि॒विश्वे॑षम्। वीर यथा (१७अ० ३७क०) अ॒भिवी॑रो-ऽअ॒भिस॑त्वा सहो॒जाः, विश्व यथा (२अ० १८क०) इ॒माँ वाच॑-म॒भि विश्वे॑ गृ॒णन्त॑ः, वत्स यथा (२६अ० ११क०) अ॒भि व॒त्सन्न स्वस॑रेषु धे॒नव॑ः, इव यथा (१८अ० ६९क०) अ॒भि इ॒वँ वर्द्ध॑मान॒म्पियो॑रुम्, वाजयन्तः यथा (१८अ० ७४क०) अ॒श्याम॒ वाज॑म॒भि वा॒जय॑न्तः॥

## अश्वस्य वाजिन इति च ॥ १०१ ॥

अश्वस्य वाजिन इति च द्विपदस्य न पूर्वपदान्तो दीर्घ-

मापद्यते, यथा (२२अ० ३७क०) अश्वस्य वाजिनस्य वि शिमाः) ॥

## विश्व सहभुवपुषवसुषु ॥ १०२ ॥

विश्व इत्येतत्पदं सह इत्येतेषु प्रत्ययेषु दीर्घमापद्यते, सह यथा (७अ० ३६क०) विश्वा साहमवसे नूतनाय, भुव यथा (३३अ० २३क०) अर्चा विश्वा नराय विश्वाभुवे, पुष यथा (२५अ० ४५क०) विश्वा पुषं रयिम्, वसु यथा (२अ० ३क०) गन्धर्वस्त्वा विश्वा वसुः ॥

## नरहामित्रेषु च ॥ १०३ ॥

नरहामित्रेषु च प्रत्ययेषु विश्वशब्दो दीर्घमापद्यते, नर यथा (३३अ० २३क०) अर्चा विश्वा नराय, हा यथा (१७अ० ४८क०) विश्वाहा शर्म यच्छतु, मित्र यथा (१३अ० ५७क०) विश्वा मित्रऋषिः । पृथग्योगकरणं शिष्याणामवग्रहत्वव्युदासप्रसक्त्यर्थम् । अर्थव्याख्यानार्थं त्ववयवदर्शनम् ॥

## तिष्ठाद्युदात्तम् ॥ १०४ ॥

तिष्ठेत्येतत् पदं दीर्घमापद्यते यद्याद्युदात्तं भवति, यथा (११अ० ४२क०) तिष्ठा देवो न सविता, (१०अ० २२क०) तिष्ठा रथमधियं वज्रहस्ता, आद्युदात्तमिति किम् (८अ० ३३क०) आतिष्ठ वृत्रहन्रथम् ॥

## प्र वणशृङ्गयासेषु ॥ १०५ ॥

प्र इत्येतत् पदं वन शृङ्ग यास इत्येतेषु प्रत्ययेषु दीर्घमापद्यते, वन यथा (१२अ० ५०क०) प्रा वणेभिः सजोषसः । शृङ्ग यथा (२४अ० १७क०) प्रा शृङ्गा मान्द्राः), यास यथा (३९अ० ११क०) प्रा यासाय स्वाहा ॥

## नि वारहारयोरनवग्रहे ॥ १०६ ॥

नि इत्ययमुपसर्गो वारहारयोः प्रत्यययोर्दीर्घमापद्यते अवग्रहवर्जिते, वार यथा (१८अ० १२क०) नीवाराश्च मे, हार-यथा (१७अ० ३२क०) नीहारेण प्रावृता, अवयवव्युत्पत्त्यर्थं वचनम् अनवग्रहाणां हि मध्ये वक्ष्यति॥

## नाऽवनयामि ॥ १०७ ॥

अवेत्येतत् पदं न दीर्घमापद्यते नयामीत्येतस्मिन् प्रत्यये यथा (५अ० २५क०) अवं नयामि वैष्णवान्। धारयामेत्येतस्मिन् सूत्रेऽवशब्दस्य नकारे दीर्घत्वं वक्ष्यति तस्यायं पुरस्तादपवादः॥

## धारयाम योजाव सचस्व नुद मोषु जयतोरुष्य रक्ष यज यक्ष्व मत्सथ पिपृत गायतातु येन नकारे ॥ १०८ ॥

धारयाम योज अव सचस्व नुद मोषु जयत उरुष्य रक्ष यज यक्ष्व मत्सथ पिपृत गायत आतु येन एते कृत्वा नकारे प्रत्यये दीर्घमापद्यन्ते, धारयाम यथा (१७अ० ९०क०) धारयामा नमोभिः, योज यथा (३अ० ५२क०) योजान्विन्द्र ते हरी, अव यथा (११अ० ४१क०) अवा नो देव्या धिया, सचस्व यथा (३अ० २४क०) सचस्वा नः स्वस्तये, नुद यथा (१५अ० १क०) अग्ने जातान् प्रणुदा नः, मोषु यथा (३अ० ४६क०) मो षूणऽइन्द्रात्र पृत्सु देवैः, मोऽइति किम् (११अ० ४२क०) ऊर्ध्वऽऊ षुणऽऊतये, जयत यथा (१७अ० ४६क०) प्रेता जयता नरः, उरुष्य यथा (३अ० २६क०) उरुष्याणोऽअघायतः। रक्ष यथा (३अ० ३०क०) रक्षा णो ब्रह्मणस्पते, यज

यथा (३३अ० ३क०) यज्ञा नो मित्रावरुणा, यच्छ यथा (३६अ० १३क०) यच्छा नः शर्म सप्रथाः, मत्सथ यथा (३३अ० ३४क०) अपि यथा युवानो मत्सथा नः, पिपृत यथा (३३अ० ४२क०) निरꣳहसः पिपृता निरवद्यात्, गायत यथा (३३अ० ६२क०) उपास्मै गायता नरः, आतु यथा (३३अ० ६५क०) आतू नऽइन्द्र वृत्रहन्, (३३अ० ९७क०) येन यथा (३४अ० १७क०) येना नः पूर्वे पितरः ॥

## भव च ॥ १०९ ॥

भवेत्ययं ह्रस्वो दीर्घमापद्यते नकारे प्रत्यये, यथा (१२अ० ११४क०) भवा नः सप्रथस्तमः सखा वृधे, पृथग्योगकरणमुत्तरार्थम् ॥

## सचा वरूथ्य वाजस्य पायुषु च ॥ ११० ॥

सचा वरूथ्य वाजस्य पायुः एषु च प्रत्ययेषु भवेत्येतत्पदं दीर्घमापद्यते, सचा यथा (३४अ० ५६क०) इन्द्रं प्राशूर्भवा सचा, वरूथ्य यथा (३अ० २५क०) उत त्राता शिवो भवा वरूथ्यः, वाजस्य यथा (१२अ० ११२क०) भवा वाजस्य सङ्गथे, पायुः यथा (१३अ० ११क०) भवा पायुर्विशोऽअस्याऽअदब्धः ॥

## अपृक्तः सौ ॥ १११ ॥

अपृक्तग्रहणेनेह उकारो गृह्यते नाकारो दीर्घविधानात्, अपृक्त उकारो दीर्घमापद्यते सुप्रत्यये, यथा (११अ० ४२क०) ऊ षु णः ऊर्ध्वऽऊषुणः, (२०अ० ८१क०) गोमदषुणा सत्या ॥

## रथि तकारनकारयोः ॥ ११२ ॥

रथीत्येतत्पदं तकारनकारयोः प्रत्यययोर्दीर्घमापद्यते, यथा (१२अ० ५६क०) रथी तमꣳ रथी नाम् ॥

अथोदारिथ शोच पनय सादयर्जु वृष शत्रु सलक्ष्माघाघारात्यृतभवत यकारे ॥ ११३ ॥

अथ उदारिथ शोच पनय सादय ऋजु वृष शत्रु सलक्ष्म घ अघ अराति ऋत भवत एते ह्रस्वा यकारे प्रत्यये दीर्घमापद्यन्ते, अथ यथा (१२अ॰ १२क॰) अर्वाधुमँ विमध्यमॅ श्रथाय, उदारिथ यथा (१७अ॰ ७५क॰) अस्माद्योनेः रुदारिथा यज, शोच यथा (३अ॰ ३क॰) बृहच्छोचा यविष्ठ्य, पनय यथा (१९अ॰ ६४क॰) देवत्ता पनया युजम्, सादय यथा (११अ॰ ३५क॰) सादया यज्ञं सुकृतस्य योनौ, ऋजु यथा (२५अ॰ १५क॰) देवानां भद्रा सुमतिर्ऋजूयताम्, वृष यथा (२०अ॰ ४६क॰) वृषायमाणो वृषभस्तुराषाट्, शत्रु यथा (१२अ॰ ५क॰) शत्रूयतो हन्ता, सलक्ष्म यथा (६अ॰ २०क॰) सलक्ष्मा यद्विषुरूपं भवाति, घ यथा (७अ॰ ३२क॰) आघा येऽअग्निम्, अघ यथा (३अ॰ २७क॰) अघायतः ऽसमस्मात्, अराति यथा (१२अ॰ ५क॰) अरातीयतो हन्ता, ऋत यथा (१३अ॰ २७क॰) मधु वाताऽऋता यते, भवत यथा (२३अ॰ ५१क॰) अर्वाञ्चोऽअद्या भवता यजत्राः ॥

व वृधवृजोः ॥ ११४ ॥

व इत्ययं ह्रस्वो वृधवृजोः प्रत्यययोर्दीर्घमापद्यते, वृध यथा (७अ॰ ३९क॰) अस्मद्रुग्वावृधे, वृज यथा (२३अ॰ ४४क॰) प्र वावृजे ॥

अद्य तठं॰ हकारचकारभवत वृणीमहे देवेषु ॥ ११५ ॥

अद्य इत्ययं ह्रस्वस्तकार हकार चकार भवत वृणीमहे देव

इत्येतेषु प्रत्ययेषु दीर्घमापद्यते, तम् यथा (३३अ० ९७क०) अ॒द्या तम॑स्य महि॒मान॑म्, इकार यथा (८अ० ४५क०) अ॒द्या इ॒वेम, चकार यथा (२१अ० १क०) इ॒वम॑द्या च॑ मृडय, भवत यथा (३३अ० ५१क०) अ॒द्या भ॑वता यज॒त्राः, वृणीमहे यथा (३३अ० १७क०) तद्दे॒वाना॒मवो॑ऽअ॒द्या वृ॑णीमहे, देव यथा (३३अ० ४२क०) अ॒द्या दे॑वाः ॥

## न होतरि ॥ ११६ ॥

होतृशब्दे प्रत्यये अद्येत्ययं ह्रस्वो न दीर्घमापद्यते, अधस्तनसूत्रेण प्राप्तस्य प्रतिषेधः, यथा (२९अ० ३४क०) तमद्य हो॑तरिषि॒तः ऽ (२१अ० ५९क०) अ॒ग्निम॒द्य होता॑रमवृणीता॒यम् ॥

## शृणुत त्विषि भ्रजि भवत पिबेत स्म तिष्ठ रक्षा मकारे ॥ ११७ ॥

शृणुत त्विषि भ्रजि भवत पिव इत स्म तिष्ठ रक्ष एते ह्रस्वा मकारे प्रत्यये दीर्घमापद्यन्ते, शृणुत यथा (७अ० ३४क०) शृ॒णु॒ता म॑ऽइ॒मम॑ᳫं हव॑म्, त्विषि यथा (१६अ० १७क०) शुष्मिन्द्र॑राय॒ त्विषी॑ मते। भ्रजि यथा (२९अ० २२क०) चि॒त्तं वात॑ऽइव॒ भ्रजी॑ मान्, भवत यथा (८अ० ४क०) आदि॑त्यासो॒ भव॑ता मृडयन्त॑÷, पिव यथा (३३अ० १०क०) पिवा॑ मि॒त्रस्य॒ धाम॑भिः, इत यथा (३३अ० ४७क०) इ॒ता म॑रुतो॒ अश्वि॑ना, स्म यथा (३३अ० ९४क०) दे॒वासो॒ हि ष्मा मन॑वे॒ सम॑न्यवः। तिष्ठ यथा (३३अ० १३क०) यु॒क्ष्वयु॒ताम॒भि तिष्ठा मह्याᳫंसि, तिष्ठाद्युदात्तमित्याद्युदात्तस्य दीर्घभाव उक्तः, अनुदात्तार्थं आरम्भः, रक्ष यथा (२९अ० ४७क०) रक्षा॒ माकि॑र्नोऽअ॒घश॑ᳫंस ऽ-ईशत ॥

## विश्वदेव्यसोमौ वत्याम् ॥ ११८ ॥

विश्वदेव्यसोमावेतौ ह्रस्वौ वति प्रत्यये दीर्घमापद्येते, विश्वदेव्य यथा (११अ० ६१क०) अदितिष्टा देवी विश्वदेव्यावती, सोम यथा (१२अ० ८१क०) अश्वावतीᳬ सोमावतीम्, वत्यामिति किम् (२४अ० १८क०) पितृणाᳬ सोमवताम् ॥

## उष महोभिर्नक्तमीकारैकारौकारनकारेभ्यः ॥ ११९ ॥

उष इत्ययं ह्रस्वो दीर्घमापद्यते महोभिः नक्त ईम् ईकार-एकारौकारनकारेभ्यः परश्चेद्भवति, महोभिः यथा (२०अ० ४०। ४१क०) प्रथमानामहोभिः उषासा नक्ता बृहती, नक्त यथा (१२अ० २क०) नक्तोषासा समनसा, ईम् यथा (१५अ० २४क०) प्रति धेनुमिवायतीमुषासम्, ईकारात् यथा (२८अ० १४क०) देवीऽउषासा नक्ता, एकारात् यथा (२९अ० ३१क०) यजतेऽउपाकेऽउषासा नक्ता, औकारात् यथा (२७अ० १७क०) दिव्येन योनाऽउषासा नक्ता, नकारात् यथा (२४अ० ४०क०) अश्वावतीर्गोमतीर्नऽउषासः, एतेभ्यः पर इति किम् (२०अ० ३६क०) समिद्धऽइन्द्रऽउषसाम् ॥

## पूरुषोऽवसाने ॥ १२० ॥

पूरुष इति दीर्घो निपात्यते अवसाने चेद्भवति, यथा (१२अ० ६१क०) न सरिष्याति पूरुषः, अवसान इति किम् (३१अ० २क०) पुरुषऽएव ॥

## पूष्णो जहीमस्तेष्वत्र ॥ १२१ ॥

अत्रेत्ययं ह्रस्वो दीर्घमापद्यते पूष्णः जहीमः ते इत्येतेषु प्रत्ययेषु, पूष्णः यथा (२५अ० २७क०) अत्रा पूष्णः, जहीमः

यथा (३५अ० १०क०) अत्रा जहीमोऽशिवा ये, ते यथा (२९अ० १८क०) अत्रा ते रूपमुत्तमम् ॥

नरसमसऽऋषीन्नस्तऽस्माहुर्नियुद्भिष्षु यत्र ॥ १२२ ॥

नरः समऽऋषीन् नः तऽस्माहुः नियुद्भि एतेषु प्रत्ययेषु यत्रे-त्ययं ह्रस्वो दीर्घमापद्यते, नरः यथा (२९अ० ४८क०) यत्रा नरः सञ्च विचद्रवन्ति, समऽऋषीन्यथा (१७अ० २६क०) यत्रा समऽऋषीन् परऽ, नः यथा (२५अ० २२क०) यत्रा नश्चक्रा जरसं तनूनाम्, तऽस्माहुः यथा (२९अ० १५क०) यत्रा तऽस्माहुऽ परमं जनित्रम्, नियुद्भिः यथा (१३अ० १५क०) यत्रा नियुद्भिः सचसे शिवाभिः ॥

अभिमाति पृतनासु सपत्न धूर्विश्व समत्सु पृतना व्रातेभ्यः सहेः ॥ १२३ ॥

अभिमाति पृतनासु सपत्न धूः विश्व समत्सु पृतना व्रात इत्येतेभ्य उत्तरस्य सहेर्ह्रस्वो दीर्घमापद्यते, अभिमाति यथा (१२अ० ११३क०) सं वृष्ण्यान्यभिमातिषाहः, पृतनासु यथा (११अ० ७६क०) जेतारमग्निम्पृतनासु सासहिम्, सपत्न यथा (५अ० १०क०) सिंह्यसि सपत्नसाही, धूः यथा (४अ० ३३क०) उस्रावेतं धूर्षाहौ, विश्वे यथा (७अ० ३६क०) विश्वासाहमवसे नूतनाय, समत्सु यथा (१५अ० ४०क०) येना समत्सु सासहः, पृतना यथा (१८अ० ६८क०) पृतनाषाह्याय च, व्रात यथा (२९अ० ४६क०) सतो वीराऽउरवो व्रातसाहाःऽ ॥

उक्थाच्च शसेः ॥ १२४ ॥

उक्थशब्दात्परस्य शसेर्धातोर्ह्रस्वो दीर्घमापद्यते, यथा (१७अ० ३१क०) उक्थशस: उ॒क्थ॒शासंस्वरन्ति ॥

## एवाच्छ चक्रमाथ ॥ १२५ ॥

एव अच्छ चक्रम अथ एते ह्रस्वा व्यञ्जनमात्रे दीर्घमापद्यन्ते, एव यथा (१३अ० २०क०) ए॒वा नो॑ दू॒र्वे॑ प्रत॑नु, अच्छ यथा (१६अ० ४क०) गिरि॒शाच्छा॑ वदामसि, चक्रम यथा (३अ० ४५क०) यदेनश्चकृ॒मा व॒यम्, अथ यथा (२६अ० २५क०) अथा मन्दस्वजुजुषा॒णः ॥

## विद्मा सौत्रामण्याम् ॥ १२६ ॥

विद्म इत्ययं ह्रस्वो दीर्घमापद्यते सौत्रामणीमन्त्रं मुक्त्वा, यथा (१२अ० १८क०) वि॒द्मा तेऽअग्ने, असौत्रामण्यामिति किम् (१८अ० ६८क०) यं॑ास्वं विद्म॒ यार॑॥ऽउ॑ च॒ न प्र॑वि॒द्म ॥

## अधा यत्स्मग्नावायुषु ॥ १२७ ॥

अध इत्ययं ह्रस्वो व्यञ्जनमात्रे दीर्घमापद्यते, यथा (१७अ० ६४क०) अधा॑ सु॒पर्णा॒निन्द्रा॒ग्नी मे॑, यत् स्म ग्ना वायुः इत्येतेषु प्रत्ययेषु न दीर्घमापद्यते, यत् यथा (२७अ० ८क०) अ॒मु॒त्र भू॒याद॒ध॒ य॒द्यमस्य॑, स्म यथा (१५अ० ६२क०) अधं स्म त॒ व्रजन॑म्, ग्ना यथा (३३अ० ४८क०) रु॒द्रोऽअ॑ध॒ग्नाः, वायुम् यथा (२७अ० २४क०) अध॑ वा॒यु॑ नि॒युतः॑, अयत्स्मग्नावायुष्विति किम् (१८अ० ६८क०) अधा॑ य॒था नः॒ पि॒तरः॑ ॥

## पूर्वो द्वन्द्वेष्ववायुषु ॥ १२८ ॥

द्वन्द्वेषु समासेषु वायुरहितेषु पूर्वः पदान्तो दीर्घमापद्यते, यथा (२अ० १५क०) अ॒ग्नीषोमौ॑, (२अ० ३क०) मि॒त्रा वरु॑णौ, (२५अ० ६क०) इन्द्रा॒बृह॒स्पती॑, द्वन्द्वेष्विति किम्

(४अ० ३३क०) अवीरहणौ ब्रह्मचोदनी, अवायुष्विति किम् (७अ० ८क०) इन्द्रवायुभ्यान्त्वा॥

हरि शयेत्येके॥ १२९॥

हरि इत्यस्य एके आचार्य्या दीर्घमिच्छन्ति शयप्रत्यये, यथा (५अ० ८क०) हरि शया हरी शया, इक इति किम् या तेऽअग्ने हरि शया॥

पिबा सोमं पिबा सुतस्य स्था मयो भुवो नृणे शमीष्व मामहानो मामहन्तामशीतम रीरिषो रीरिषत यामयन्ति हि ष्मा ते वर्द्धया रयिं श्रुधी हवञ्चरा सोम सूयवसिनी श्रोता ग्रावाणो धर्षा मानुषः पाथा दिवो युक्ष्वा हि गमयातमः सिञ्चता सुतम्परीवापऽउक्था शस्त्राण्यत्ता हवीं॑ष्याच्या जानु च्यामा रेरिहत् च्यामा भिन्दन्तो रुहेमा स्वस्तये जनयथा च धारयाम पितरा मृधो बोधा मे विचृता बन्ध-मवता हवेषु शृणुधी गिरो रक्षा तोकञ्चर्षणीस-हाञ्चर्षणीधृतो येना समत्सु वनेमा तऽऋध्यामा ते शिक्षा सखिभ्यस्तक्षारथन्दीया रथेनेता जयत वर्द्धया त्वं प्रभवामा घृतस्याजगन्या परस्या ररिमा हि पुरी तता ग्रीष्माकर्णशुष्का-कर्णौ प्रकृतिदीर्घावित्येके नौ काशाऽअनू काशेन

चक्राजरसम्मिथूकस्तरता सखायः सासह्वानपामार्गोभयादतऽष्टतीषहमभीषु सुष्टरीमा जुषाणा यजा देवान् येना पावकाश्वायन्तो यदी सरमा स्वदया सुजिह्व निषद्या दधिष्व सदतना रणिष्ट न भरा चिकित्वाँश् चिकित्सा गविष्टावबाद्रुद्रचा चायुनक्सृजा रराणः साढन्यमिति च ॥ १३० ॥

पिबा सोमम्, पिबा सुतस्य, स्था मयो भुवः, नूरले, शमीष्व, मामहानः, मामहन्ताम्, अशीतम, रीरिषः, रीरिषत, यामयन्ति, हिष्मा ते, वर्द्धया रयिम्, श्रुधी हवम्, चरा सोम, सूयवसिनी, श्रोता ग्रावाणः, धर्षा मानुषः, पाथा दिवः, युक्ष्वा हि, गमयातमः, सिञ्चता सुतम्, परीवापः, उक्था शस्त्राणि, अत्ता हवींऽषि, आच्या जानु, चामा रेरिहत्, चामा भिन्दन्तः, वहेमा स्वस्तये, जनयथा च, धारयाम, पितरा मृधः, बोधा मे, विचृता बन्धम्, अवता हवेषु, शृणुधी गिरः, रक्षा तोकम्, चर्षणीसहाम्, चर्षणीधृतः, येना समत्सु, वनेमा ते, ऋध्यामा ते, शिक्षा सखिभ्यः, नवारथम्, दीया रथेन, इता जहत, वर्द्धया त्वम्, प्रब्रवामा घृतस्य, आजगन्था परस्याः, ररिमा हि, पुरो तता, प्रीहाकर्णः, शण्ठाकर्णः, नौकाशाः, अनू काशेन, चक्राजरसम्, मिथूकः, तरता सखायः, सासह्वान्, अपामार्गः, उभयादतः, ऋतीषहम्, अभीषु, सुष्टरीमा जुषाणा, यजा देवान्, येना पावक, अश्वायन्तः, यदी सरमा, स्वदया सुजिह्व, निषद्या दधिष्व, सदतना रणि-

ष्टन, भरा चिकित्वान्, चिकित्सागविष्टौ, अवादद्त, रच्चा च, आयुनक्सूजा रराणः, सादन्यम्, एते ह्रस्वा दीर्घमापद्यन्ते । पिब सोमम् यथा (२३अ० ४क०) पिबा सोमᳫं शतक्रतो, (७अ० ३६क०) पिबा सोमं मनुष्वधं मदाय, पिब सुतस्य यथा (३३अ० ७०क०) पिबा सुतस्यान्धसो मदाय, स्थ मयो भुवः यथा (११अ० ५०क०) आपो हि ष्ठा मयो भुवः, नु रणे यथा (१७अ० १०क०) तूर्वन्नयामन्नेतशस्य नू रणे, शमीष्व यथा (१अ० १५क० हविःऽ शमीष्व, ममहानः यथा (१७अ० ५५क०) समिद्धेऽअग्नावधि मामहानः), ममहन्ताम् यथा (३३अ० ४२क०) तन्नो मित्रो वरुणो मामहन्ताम्, अग्नि तम यथा (२अ० २०क०) अग्ने दब्धायोऽशीतम, रीरिषः यथा (१६अ० १६क०) मानोऽअश्वेषु रीरिषः, रीरिषत यथा (२५अ० २२क०) मा नो मध्या रीरिषतायुः, यमयन्ति यथा (२५अ० ३८क०) प्रिया देवेष्वायामयन्ति, हि स्म ते यथा (३अ० ४६क०) अस्ति हि ष्मा ते, होति किम् (१५अ० ६२क०) अध स्म ते व्रजनम्, वर्द्धय रयिम् यथा (३अ० १४क०) अथा नो वर्द्धया रयिम्, श्रुधि हवम् यथा (२१अ० १क०) इमं मे वरुण श्रुधी हवम्, चर सोम यथा (४अ० ३७क०) प्रचरा सोम दुय्यान्, श्रोत ग्रावाणः यथा (६अ० २६क०) श्रोता ग्रावाणो विदुषो न यज्ञम्, धर्ष मानुषः यथा (६अ० ८क०) मुष्टामि धर्षा मानुषः, पाथ दिवः यथा (८अ० ३१क०) पाथा दिवो विमहसः, युक्ष्व हि यथा (८अ० ३४क०) युक्ष्वा हि केशिना हरी, गमय तमः यथा (८अ० ४४क०) अधरं गमया तमः, सिञ्चत यथा (१९अ० २क०) परीतो षिञ्चता सुतम्, परि वापः यथा (१९अ० २१क०) परी वापः पयो दधि, उक्थ शस्त्राणि यथा (१९अ० १८क०) छन्दोभिरुक्था शस्त्राणि, अत्त हवीᳫंषि यथा (१९अ०

६८क०) यन्ता हवींऽषि प्रयतानि बर्हिषि, आच्य जानु यथा (१८अ० ६२क०) आच्या जानु दक्षिणतः। वाम रेरिहत् यथा (१२अ० ६क०) वामा रेरिहद्वीरुध+, वाम भिन्दन्तः यथा (१८अ० ६८क०) वामा भिन्दन्तोऽअरुणीः। रुहेम स्वस्तये यथा (२१अ० ६क०) अस्रवन्तीमा रुहेमा स्वस्तये, जनयथ च नः यथा (११अ० ५२क०) आपो जनयथा च नः, धारय मयि यथा (११अ० ५८क०) धारया मयि प्रजाम्, तन्व मृध: यथा (११अ० ७२क०) अग्ने त्वन्तरा मृधः, बोध मे यथा (१२अ० ४२क०) बोधा मे अस्य, विचृत बन्धम् यथा (११अ० ६३क०) विचृता बन्धमेतम्, अवत हवेषु यथा (१७अ० ४३क०) देवा अवता हवेषु, शृणुधि गिरः यथा (१३अ० ५२क०) पाहि शृणुधी गिरः, रक्ष तोकम् यथा (१३अ० ५२क०) रक्षा तोकमुतत्मना, चर्षणिसहाम् यथा (२८अ० १क०) चर्षणीसहां वेत्वाज्यस्य, चर्षणिधृतः यथा (७अ० ३३क०) ओमासश्चर्षणीधृतः, येन समत्सु यथा (१५अ० ४०क०) येना समत्सु सासहः, वनेम ते यथा (१५अ० ४०क०) वनेमा तेऽअभिष्टिभिः, ऋध्याम ते यथा (१५अ० ४४क०) ऋध्यामा तऽओहैः, शिक्ष सखिभ्यः यथा (१७अ० २१क०) शिक्षा सखिभ्यो हविषि, तत्र रथम् यथा (२८अ० ४१क०) तत्रा रथमुप शग्मं सदेम, दीय रथेन यथा (१७अ० ३६क०) बृहस्पते परि दीया रथेन, इत जयत यथा (१७अ० ४६क०) प्रेता जयता नरः, वर्द्धय त्वम् यथा (१७अ० ५२क०) तमग्ने वर्द्धया त्वम्, प्रब्रवाम घृतस्य यथा (१७अ० ९०क०) वयन्नाम प्रब्रवामा घृतस्य, जगन्म परस्याः यथा (१८अ० ७१क०) परावतऽआजगन्मा परस्याः, ररिम हि कामम् यथा (१७अ० ७५क०) वयन्तेऽअद्य ररिमा हि कामम्, पुरि तता यथा (११अ० ८क०) अन्तरिक्षं पुरी

तर्ता, अस्य पदस्यापवादोऽभिप्रेतः तथा हि, (२८अ० ८क०) पृशुपते॑ः पुरीतदित्येतदपि भवति, प्लीहाकर्णः शुण्ठाकर्णः एतौ शब्दौ प्रकृतिदीर्घावित्येके आचार्य्या मन्यन्ते, यथा (२४अ० ४क०) प्लीहाकर्ण॑ः शुण्ठाकर्ण्॑ः, नि काशाः यथा (२४अ० १८क०) बभ्रुनी॑ काशा॑ः पितृणाम्, अनु काशेन यथा (२५अ० २क०) अन्तरंसन् काशेन॑, चक्रजरसम् यथा (२५अ० २२क०) यत्रा नश्च क्रा जरसं॑तनूनाम्, मिथु कः यथा (२५अ० ४३क०) गात्राण्यसिना मिथू॑ क॑ः, तरत सखायः यथा (३५अ० १०क०) प्रतरता सखाय॑ः, मसक्वान् यथा (३८अ० ७क०) मासक्वाँश्चाभियुग्वा च॑, अपमार्ग यथा (३५अ० ११क०) अपा मार्ग त्वमस्मत्, उभय दतः यथा (३१अ० ८क०) ये के चो॑भयादत॑ः, ऋति षहम् यथा (२६अ० ११क०) तवो॑ दस्मऋ॑तीषहम्, अभि सु यथा (३६अ० ६क०) अभी षुणः॑ सखी॑नाम्, सुष्टरीम जुषाणा यथा (२८अ० ४क०) बर्हिःऽ सुष्टरी॑मा जुषाणा, यज देवान् यथा (३३अ० ३क०) यजा देवाँ२॥ऽऋतस्वृहत्, येन पावक यथा (३३अ० ३२क०) येना पावकचक्षसा, अश्वयन्तः यथा (२७अ० ३६क०) अश्वायन्तो॑ मघवन्. यदि सरमा यथा (३३अ० ५८क०) विदद्यदी॑ सरमा, स्वदय सुजिह्व यथा (२८अ० २६क०) समञ्जन् स्व॑दया सुजिह्व, निषद्य दधिष्व यथा (२६अ० २३क०) बर्हिष्या निषद्या दधिष्व। सदतन रणिष्टन यथा (२६अ० २४क०) सदतना रणिष्टन, भर चिकित्वान् यथा (३४अ० १४क०) उत्तानायामवभरा चिकित्वान्, चिकित्सगर्विष्टौ यथा (३४अ० २३क०) प्रचिकित्सागर्विष्टौ, अवददत् यथा (३४अ० ३६क०) भगेमां धियमुदवा ददन्न॑ः, रक्ष च यथा (३४अ० २७क०) रक्षा च नोऽअधि च ब्रूहि देव, अयुनक् यथा (२८अ० १३क०) यमेन दत्तं त्रित-

ऽए॑नमायुनक्, सूज ररांण: यथा ( २७अ० २१क० ) वनेस्पतिऽर्वसृजा ररांण(:, सदन्यम् यथा (३४अ० २१क०) मातृन्य विदुत्यम् ॥

## अनुनासिकमुपधा प्रागन्तस्थायाः ॥१३१॥

ह्रस्वो दीर्घः प्लुतः सानुनासिको निरनुनासिक उदात्तोऽनुदात्तः स्वरित इति स्वरधर्माः तत्र पदे दृष्टस्यान्यथाभावो विकार उच्यते स चात्र स्वरे एवाधिकृतो न व्यञ्जने यतो दीर्घमित्यारभ्यते अत इहापि स्वरस्यैवानुनासिक्यं विकार उच्यते इयांस्तु विशेषः यत्र नकारमकारावेव परभूतौ तयोश्च विकारे सति स्वरस्य विकारः। यत्र तु तयोः प्रकृतिभावो वा लोपो वा तत्र स्वरस्यापि विकारो न भवति, यथा (१२अ० ७०क०) अस्मान् सी॑त इत्येवमादि, (४अ० ६सू०) यत्प्रागन्तस्थासंशब्दनात्, यमित ऊर्ध्वमनुक्रमिष्यामस्तत्रोपधाभूतः स्वरोऽनुनासिकं स्वरं विकारमापद्यते इत्येतदधिकृतं वेदितव्यम् वक्ष्यति (अ० ३। सू० १३४। १३५) "नुः" "चच्छयोः शम्" यथा (२४ २६। २४। २८) प्लुषीन् चक्षुषे वाचे प्लुषीँश्चक्षु॑षे, गवयान् त्वष्ट्रे बृहस्पतये गवयांस्त्वष्ट्रेऽउष्ट्रा॑न् ॥

## स्वर औपशविः ॥ १३२ ॥

औपशविराचार्य्यः स्वरएव प्रत्यय उपधानुनासिक्यमिच्छति, नुरिति वक्ष्यति अतस्तस्यैव परभूतो यः स्वर उक्तः उपधा च तस्यैव ग्राह्या, यथा (२६अ० १०क०) महान् इन्द्रः महाँ २॥ऽइन्द्रो वज्र॑हस्त(:, (११अ० ८२क०) त्वान् अहम् उन्नयामि त्वाँ २॥ऽअहम्, (७अ० ३७क०) शत्रून् अप जहि शत्रूँ ॥ रप मृधो॑ नुदस्व, स्वर इति किम् (२४अ० २८क०) गवयान् त्वष्ट्रे गवयाँस्त्वष्ट्रे॑ ॥

## अनुस्वारेण व्यञ्जने ॥ १३३ ॥

नकारात् परे व्यञ्जनेऽनुस्वारेण व्यवधानमिच्छत्यागमि-
यौपशविराचार्य्यः, अयञ्च उपधानकारयोरितरो भवति
नकारस्य शकारः सकारो वा विहितस्तत्रापि भवति,
१सू०) "अनुस्वार ठं० रोष्मस्वति" वचनात्, यथा
[ चक्षुषे प्र॒ष्टी॒ᳪश्च॑क्षु॑षे, गवयान्त्वष्ट्रे ग॒व॒याᳪस्त्वष्ट्रे॑ ॥

## नुः ॥ १३४ ॥

[कारोऽधिकृतो वेदितव्यः ॥

## चच्छयोः शम् ॥ १३५ ॥

चकारच्छकारयोः प्रत्यययोर्नकारः शकारमापद्यते
[मिकं चोपधा, यथा (१६अ० ५क०) अहीन् च
[ सर्वा॑न्, प्र॒ष्टी॑ँश्चक्षुषे, छकारोदाहरणं मृग्यम्, रूपो-
ग्ान्तु विद्यते यथा विद्वान् छकारः विद्वाँश्छकारः ॥

## तथयोः सम् ॥ १३६ ॥

[कारथकारयोः प्रत्यययोर्नकारः सकारमापद्यते अनुना-
[ोपधा, यथा (२४अ० २८क०) गवयान् त्वष्ट्रे ग॒व॒याँ-
(१७अ ११क०) अन्यान् ते अ॒न्याँस्ते॑, थकारस्य रूपो-
[म् यथा विद्वान् थकारः विद्वाँस्थकारः ॥

## [द]धन्वान् स्ववान्यकारे लोपम् ॥ १३७ ॥

[ध]न्वान् स्ववान् एतौ नकारौ यकारे प्रत्यये लोपमा-
अत्र च लोपविधानादुपधानुनासिक्यमपि न भवति,
[ो]क्तम् स्वराणामानुनासिक्यं प्रतिजानन्ति सर्वदा, वर्ज-

यित्वा तमाकारं यत्र लोपो विधीयते, यथा (१९अ० २क०) दधन्वान् यः दधन्वा यो नर्य्योऽअप्स्वन्तरा, स्ववान् यथा (३४अ० २६क०) स्ववाँयात्स्ववाँ॥

## रयिवृधे च॥ १३८॥

रयिवृध इत्येतस्मिंश्च प्रत्यये पूर्वो नकारो लोपमापद्यते, यथा (२७अ० २३क०) अन्नान् रयिवृधः पीवोऽअन्ना रयिवृधः, उक्तहेतुत्वादत्राप्युपधानुनासिकत्वन्न भवति॥

## नपुंसकादिकारस्य॥ १३९॥

नपुंसकादुत्तरो यो नकारस्तस्य सम्बन्धिन इकारस्य लोपो भवति, यथा (३७अ० ५३क०) एमन् सादयामि, भस्मन् सादयामि, एमनि भस्मनीति प्राप्ते इकारलोपश्छान्दसः, नपुंसकादुत्तरस्येकारस्य लोप उक्तोऽनपुंसकादपि भवति। यथा (१७अ० १क०) अश्मन्नूर्जम् अश्मनीनि प्राप्ते॥

## न सप्तम्यामन्त्रितयोः॥ १४०॥

सप्तम्यामन्त्रितयोर्विभक्त्योः सम्बन्धिन इकारस्य न लोपो भवति, यथा (१३अ० ५३क०) (अपान्त्वा सधिषि, अपान्त्वा पाथसि, एते सप्तम्या उदाहरणे (१अ० २५क०) हे पृथिवि आमन्त्रितविभक्तेरुदाहरणम् अनकारार्थ आरम्भः॥

## नॄन्पकारे विसर्जनीयम्॥ १४१॥

नॄनित्ययं नकारः पकारे प्रत्यये विसर्जनीयमापद्यते अनुनासिकं चोपधा, यथा (१३अ० ५२क०) नॄन् पाहि नॄँःऽ पाहि शृणुधी गिरः॥

## ऋतून् परिधीन् क्रतून् वनस्पतीन् स्वरे रेफम्॥ १४२॥

अव्नून् परिधीन् ऋतून् वनस्पतीन् एते नकाराः स्वरे प्रत्यये अव्नून् रेफमापद्यन्ते अनुनासिकं चोपधा, अव्नून् यथा (७अ० ३७क०) अप जहि अव्न्ँ १॥रपृमृध्र्÷। परिधीन् यथा (१८अ० ५३क०) वन्वन्न वातः परिधीँ१॥ रपं+, ऋतून् यथा (१८अ० ४०क०) अग्ने ऋत्वा ऋतूँ१॥ रनु, वनस्पतीन् यथा (१३अ० ७क०) ये वा वनस्पतीँ१॥रनु॥

## आकारोपधो यकारम्॥ १४३॥

आकारोपधो नकारो यकारमापद्यते स्वर इत्यनुवर्त्तते अनुनासिकं चोपधा, यथा (७अ० ४०क०) महान् इन्द्रः महान् य इन्द्र इत्येवं संहिता प्राप्नोति ततो (४अ० १२५सू०) "यवयोः पदान्तयोः स्वरमध्ये लोपः" इति यकारलोपे कृते "न परकालः पूर्वकाले पुनरिति" सन्धिर्न भवति ततो महाँ २॥ऽ इन्द्र इत्येतद्रूपं सम्भवति, ननु यथा (प्रा० ३अ० १३७सू०) "दधन्वान् स्ववान् यकारे लोपः" इति नकारलोपे कृते सत्युपधानुनासिक्यन्न प्रवर्त्तते एवमिहापि नकारस्य यकारीभूतस्याश्रवणादुपधानुनासिक्यन्न प्रवर्त्तते तत्कथमुपधानुनासिक्यमिति लुप्तस्यापि स्वकार्य्यकारणादित्यदोषः, यदि हि यकारो व्यञ्जनकार्य्यं न कुर्य्यात् कथमिह स्वरयोः सन्धिर्न स्यात् अतः स्वकार्य्यकारणादुपधानुनासिक्यमपि भवति यथा (७अ० ४०क०) वृष्टिमान् इव पर्जन्यो वृष्टिमा २ँ॥ऽ इव॥

## न तमे॥ १४४॥

यन्नकारस्य तकारे प्रत्यये विहितस्तत्तमप्रत्यये न भवति, यथा (८अ० ४८क०) मदिन् तमानाम् मदिन्तमानाम्त्वा, मधुन् तमानाम् मधुन्तमानाम्त्वा, तथयोः समित्यस्यापवादः।

## निर्जगन्वान् तमसि॥ १४५॥

निर्जगन्वानित्ययं नकारस्तमसि प्रत्यये न विकारमापद्यते, यथा (१२अ० १३क०) निर्जगन्वान् तमसः निर्जगन्वान्तमसो ज्योतिषागात् ॥

## धामन्त्सन्न्चिकित्वाँस्त्वं पूषन्नर्वन्निति च ॥१४६॥

धामन् अत्र न् चिकित्वान् त्वम् पूषन् अर्वन् एते नकारा न विकारमापद्यन्ते। धामन् यथा (१७अ० ८६क०) धामन्ते विश्वं भुवनम्। अत्र न् यथा (१८अ० ७१क०) अत्र न्ताढि विमृधो नुदस्व। चिकित्वान् त्वम् यथा (२९अ० २५क०) आ च वह मित्र महश्चिकित्वान्त्वम्। त्वमिति किम् (७अ० १५क०) स प्रथमो बृहस्पतिश्चिकित्वाँस्तस्मै। पूषन् यथा (३४अ० ४१क०) पूषन्तव व्रते वयम्। अर्वन् यथा (२९अ० २२क०) तव शरीरं पतयिष्ण्वर्वन्तव चित्तम्। इति चेत्यस्यावयस्यार्थः। इति शब्दः प्रकारदर्शनार्थः। यथा अधस्तनसूत्रयोस्तकारे नकारस्य प्रकृतिभावः एवमिहापि नकारस्य प्रकृतिभाव एव तथा च व्याख्यातम्। चकारस्तकारापवादावधिद्योतनार्थः॥

## अश्वादौ चाध्याये ॥ १४७ ॥

स्वर इति वर्त्तते अश्वस्तूपर इत्येतस्मिन्नध्याये नकार आकारोपधः स्वरे प्रत्यये प्रकृत्या भवति। "आकारोपधो यकारम्" इत्यस्यापवादः। यथा (२४अ० १९क०) शिशुमारान् आलभते समुद्राय शिशुमारानालभते। मण्डूकान् अद्भ्यः मण्डूकानद्भ्यः)। स्वरानुवृत्तिरिति किम् गवयाँस्त्वष्ट्रे, सुषोमघुषे॥

## मनुष्याँस्ताँल्लोकानमित्रानुदि ॥ १४८ ॥

मनुष्यान् तान् लोकान् अमित्रान् एते नकाराः प्रकृत्या भवन्ति उदि उपसर्गे प्रत्यये। मनुष्यान् यथा (६अ० ३१क०) मनुष्यान् उत् मनुष्यानुदजयताम्। तान् यथा तान् उत् तानुज्जेषम्। लोकान् यथा लोकाँल्लोकानुदजयताम्। अमित्रान् यथा (११अ० ८२क०) क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वान् ॥

## आप्नोतीत्योश्च ॥ १४९ ॥

आप्नोती, प्रत्यये इतौ च मकारो न विकारमापद्यते। आप्नोति, यथा (१९अ० २९क०) भक्षान् आप्नोति इडाभिर्भक्षानाप्नोति। इति यथा (११अ० ५९क०) अपद्यान् इति अदितिः अपद्यानिति ॥

## सङ्क्रमे च वैष्णवान् ॥ १५० ॥

वैष्णवानित्ययं नकारो न विकारमापद्यते स्वरे प्रत्यये। सङ्क्रमश्च क्रमे भवति अतः क्रमसंहितायामित्यर्थः यथा (५अ० २६क०) वैष्णवान् अव वैष्णवानव ॥

गृहानेमि गृहानुपह्वयामहे वर्चस्वानहम्मनुष्यानन्तरिक्षमग्निष्वात्तान्तुमतः पयस्वानग्ने तानश्विना पतङ्गानसन्दितः स्वर्गानपां पतिः सपत्नानिन्द्रसपत्नानिन्द्राग्नी नभस्वानार्द्रदानुर्विद्वानग्नेर्देवानस्वेधतानड्वानाशुरथैतानष्टौ विरूपानालभत एतावानस्यायुष्मानग्ने वायव्यानारण्याः प्रविद्वानग्निनानड्वानधोरामौ शत्रूननुयँ-यातुधानानस्मादस्मानरिष्टेभिरिति ॥ १५१ ॥

एतेषां द्विपदानां पूर्वं पदान्तीया नकाराः प्रकृत्या भवन्ति। (३अ० ४१क०) गृहानैमि मनसा मोदमानः। (३अ० ४२क०) गृहानुपह्वयामहे। (८अ० ३८क०) वर्चस्वानहं मनुष्येषु। (८अ० ६०क०) मनुष्याननन्तरिक्षमगन्। (१९अ० ६१क०) अग्निष्वात्तानृतुमतो हवामहे। (२०अ० २२क०) पर्यस्वानग्नऽआगमन्तम्। (२१अ० ४२क०) ताननिश्वना सरस्वती। (१३अ० १०क०) तपूंष्यग्नेजुह्वा पतङ्गानसन्दितः। (१३अ० ३१क०) स्वर्गानपां पतिर्वृषभः। (१७अ० ६४क०) अधा सपत्नानिन्द्राग्नी मे। (१८अ० ४५क०) समुद्रोऽसि नभस्वानार्द्रदानुः। (१७अ० ६६क०) प्राचीमनुप्रदिशं प्रेहि विद्वानग्नेः। (१८अ० ७५क०) देवानसेधता मन्मना। (२२अ० २२क०) अनड्वानाशुः सप्तिः पुरन्धिः। (३०अ० २२क०) अथैतानष्टौ विरूपानालभते। (३१अ० ३क०) एतावानस्य महिमा। (३५अ० १७क०) आयुष्मानग्ने हविषा वृधानः। (३१अ० ६क०) वायव्या नारण्या ग्राम्याश्च ये। प्रविद्वानग्निना। (२९अ० ५९क०) अनड्वानधो रामौ। (२३अ० ८०क०) अत्रननु यँ विश्वे मदन्त्यूमाः। नकारस्य रेफापवादः। इतरत्र तु सर्वत्र यकारापवादः। (३४अ० २६क०) अपसेधन्रक्षसो यातुधानानस्थात्। (३४अ० ३०क०) द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिः॥

## इष्टं इष्टिः॥ १५२॥

इत्युक्तार्थम्॥

## इति कात्यायनकृतौ प्रातिशाख्यसूत्रे तृतीयोऽध्यायः॥

आनन्दपुरवास्तव्यवज्रटसूनुना उवटेन कृते मातृमोदाख्ये प्रातिशाख्यनिर्मलभाष्ये तृतीयोऽध्यायः समाप्तः॥

## चतुर्थोऽध्यायः ।

### अनुस्वारꣳ रोष्मसु मकारः ॥ १ ॥

अनितावध्याय इत्यनेन सूत्रेण योऽवधिस्त्वेन वर्णितः । अतोऽवधिपरिज्ञापनार्थमध्यायसमाप्तिः कृता कात्यायनाचार्य्येण । आह च । अनितावध्याय इति कृतं सूत्रं यतः पुरा । अतस्तदवधिप्राप्तिः क्रियतेऽध्यायसङ्ख्यया । अत्रावधिससाधीतं पदमन्तविकारिमत् । आचार्य्येणोच्यते तस्य प्रागुक्त्यादिप्रयोजनम् । मकारोऽनुस्वारमापद्यते रोष्मसु प्रत्ययेषु । रेफे यथा (९अ० ३क०) अपाम् रसेन । अपाꣳ रसेन वरुणः । ऊष्मसु यथा (१७अ० ७६क० )त्वाम् शश्वन्तः त्वाꣳ शश्वन्तऽउपयन्ति वाजाः । (४अ० २५क०) देवꣳ सवितारमोण्योः । (१३अ० १०क०) तपूꣳषि । (८अ० २३क०) उरुꣳ हि राजा ॥

### नुस्वान्तःपदेऽरेफे ॥ २ ॥

नकारोऽनुस्वारमापद्यते । चशब्दान्मकारश्च । पदस्य मध्ये अरेफे रेफशब्दस्य पर्य्युदासात् । ऊष्मस्वेवानुस्वारापत्तिर्भवति । यथा (८अ० १९क०) जग्निवान् सः । जग्निवाꣳ सः । (८अ० १९क०) पपिवान् सः । पपिवाꣳ सः । (१३अ० १०क०) तपूम् षि तपूꣳष्यग्ने । (१७अ० ७५क०) हवीन् षि । हवीꣳषि । एते नकारप्रकृतयोऽनुस्वाराः ॥

### वꣳश ॥ ३ ॥

वनतेर्धातोर्वमतेर्वणादेर्यो वशप्रत्ययः । वनतेर्वमतेर्धातो रौणादिकशप्रत्यये नकारप्रकृतिर्मकारप्रकृतिर्वाऽनुस्वारः । सन्देहात्सतकारेष कण्ठरवेण सूत्रं कृत्वा पठितः । अतो नकारप्रकृतिर्वा मकारप्रकृतिर्वाऽनुस्वारः । (१६अ० ४३क०)

किम् शिलाय किं॒ठ॒° शिलायं (२अ० २५क०) अ॒ग्नेः॑स्त॒। (२५अ० ४५क०) पुं॒ठ॒° सः। एते मकारप्रकृतयोऽनुस्वारा भवन्ति। एवमन्येऽप्यन्वेषितव्याः। अरेफ इति किम्। व॒ह्नः। (११अ० ७४क०) य॒द्ग्नोऽअ॑ति॒सर्प॑ति॥

## अनुनासिका चोपधा॥ ४॥

अतोऽधिकाराद्यमन्यं विकारं वक्ष्यामो मकारनकारयोस्तत्रानुनासिका चोपधा भविष्यतीत्यधिकृतं वेदितव्यम्। ननु "अनुनासिकमुपधा प्रागन्तस्थायाः" इति उपधाऽनुनासिक्यं विहितमेव किमनेन सूत्रेण क्रियते। एवन्तर्हि व्यवस्थार्थं वचनम्। यस्मिन् पक्षे अनुस्वारो न भविष्यति। तस्मिन् पक्षे उपधाया आनुनासिक्यं भविष्यति। अधिकारार्थोऽयमारम्भः॥

## लोपं काश्यपशाकटायनौ॥ ५॥

काश्यपशाकटायनावाचार्य्यौ मकारनकारयोर्लोपं मन्यते। अस्मिन् पक्षे वाक्यद्वयम्। अनुनासिका चोपधा भवति। यथा अ॒पाँ रसे॑न। पक्षे अपाः॑ रसे॑न। त्वाँ शश्वन्तः। त्वाः॑ शश्वन्तः। ताँ सवितुः। ताः॑ स॒वि॒तुः। त्वाँ हि। त्वाः॑ हि। तपूँ॑षि। तपूः॑ष्यग्ने। अग्नेस्तँ। अग्नेः॑स्तं। किँ शिलायं। किं॒ठ॒° शिलायं। (२०अ० १२क०) य॒जूँ॑षि। य॒जूः॑षि॒ सामभिः॥

## प्रकृत्या सम्राट्साम्राजि॥ ६॥

सम्राट्शब्दे समः सम्बन्धी मकारो रेफे परभूते प्रकृत्या भवति, तथा साम्राज्यशब्दे समो मकारो रेफे परे सति प्रकृत्या भवति। यथा (२०अ० ५क०) सु॒म्राडिति॑ स॒म्। राट्।

सम्राट्चच्नु+। (४अ० २४क०) साम्राज्यमिति साम्। राज्यम्। साम्राज्यङ्गच्छेति मे। (१८अ० ३७क०) साम्राज्येनाभिषिञ्चामि॥

## शं चे पकारादुकारोदयात्॥ ७॥

पकारादुकारोदयात्परो मकारः शकारमापद्यते, चकारे परभूते अनुनासिका चोपधा भवति। यथा (३०अ० २२क०) पुम् चली। पुँश्चली कितवः। च इति किम्। (२५अ० ४५क०) पुंꣳ सः। पकारादुकारोदयादिति किम्। (१६अ० ८क०) प्रमुञ्च। (२अ० २३क०) विमुञ्चति॥

## समन्तःपदे कखपफेष्वनूष्मपरेषु॥ ८॥

सकारमापद्यते मकारः पदमध्ये कखपफेषु प्रत्ययेषु किं विशिष्टेषु अनूष्मपरेषु यद्यूष्माणः परभूता न भवन्ति अनुनासिका चोपधा। यथा (७अ० १४क०) सम् कृतिः। सँस्कृतिः। पुम् खाताः। पुँस्खाताः। पुम् पुत्राः। पुँस्पुत्राः। पुम् फलाः। पुँस्फलाः। अनूष्मपरेष्विति किम्। सम् क्षरे। सङ्क्षरेऽमृतऽइति॥

## नुश्चाम्रेडिते॥ ९॥

नकारः चशब्दान्मकारः सकारमापद्यते अनुनासिका चोपधा आम्रेडिते पदे कखपफेष्वनूष्मपरेषु। पदमध्ये यथा कान् करवाणि। काँस्करवाणि। कान् कानामन्त्रयति। काँस्कानामन्त्रयति आम्रेडिते किम्। कान् करवाणि। इह यान्युदाहरणानि संहितायां नोपलभ्यन्ते तेषामपि लक्षणं प्रसङ्गात् क्रियमाणं न विरुध्यत एव यथा जलाहरणस्य मत्स्याहरणं पुष्पाहारस्य फलाहरणं च न विरुध्यते॥

अन्तस्थामन्तस्थास्वनुनासिकां परसस्थानाम् ॥ १० ॥

अन्तस्थामापद्यते मकारः अन्तस्थासु परभूतासु परस्या अन्तस्थायाः समानस्थानां यदि सामानुनासिकां समानाम्। यथा (१अ०२२क०) सम् यौमि। सँय्यौमीदम्। (११अ० १३क०) रासभम् युवम्। युञ्जाथाᳬ रासभँय्युवम्। (१अ० २१क०) सम् वपामि। सँव्वपामि। (२०अ० २५क०) तम् लोकम्। तँल्लोकं पुण्यम्। रेफेऽनुस्वारो विहितः।

हि ॥ ११ ॥

"अन्तराः कालाः" इत्युक्तम्। अतस्तत्काऽवधिद्योतनार्थं हिशब्दः॥

स्पर्शे परपञ्चमम् ॥ १२ ॥

मकारः स्पर्शे प्रत्यये परस्य प्रत्ययभूतस्य पञ्चममापद्यते। परः स्पर्शो यस्मिन् वर्गे तस्य वर्गस्य पञ्चममित्यर्थः। यथा (४अ० ११क०) व्रतम् कृणुत। व्रतङ्कृणुत। (१अ० ५क०) व्रतम् चरिष्यामि। व्रतञ्चरिष्यामि। (२अ० १२क०) एतम् ते देव। एतन्ते देव सवितः। (१९अ० ६८क०) इदम् पितृभ्यः। इदम्पितृभ्यो नमः। (१२अ० ४६क०) सम् ज्ञानमसि। सञ्ज्ञानमसि॥

तकारो ले लम् ॥ १३ ॥

तकारो लकारे प्रत्यये लकारमापद्यते। यथा (१४अ० ३१क०) आसीत् लोकम्। आसील्लोकम्। (१२अ० ४५क०) परिचित् लोकम्। परिचिल्लोकम्। क्रमसंहितोदाहरणम्॥

नुश्चाऽनुनासिकम् ॥ १४ ॥

नकारो लकारप्रत्यये लकारमापद्यते। यदि समाना-ऽनुनासिकम्। यथा (३अ० २१क०) अस्मिन् लोके। अस्मिँल्लो-केऽस्मिन् त्वये। (८अ० २१क०) त्रीन् लोकान्। त्रीँल्लोका-नुदजयत्॥

## ङ्नौ काभ्याꣳ सकारे ॥ १५ ॥

ङकारनकारौ यथासङ्ख्यं ककारतकाराभ्यां व्यवधीयेते सकारे प्रत्यये। यथा (१८अ० ३क०) प्राङ् सोमः। प्राङ्क्सो-मोऽअति द्रुतः। प्रत्यङ् सोमः। प्रत्यङ्क्सोमोऽअतिद्रुतः। (१३अ० ३१क०) त्रीन् समुद्रान्। त्रीन्त्समुद्रान्त्समसृपत्। (१२अ० ७०क०) अस्मान् सीते। अस्मान्त्सीते पयसा॥

## न दाल्भ्यस्य ॥ १६ ॥

दाल्भ्यस्याचार्य्यस्य मते नैतावागमौ भवतः। प्राङ्सोमः। प्रत्यङ्सोमः। त्रीन् समुद्रान्। अस्मान्सीते॥

## रलाभ्यां ऋऌवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र ॥१७॥

रेफलकारौ ऋऌवर्णाभ्यां ऋऌसदृशश्रुतिभ्यां यथासंख्यं व्यवधीयेते ऊष्मणि परभूते स्वरपरे सर्वत्र संहितायां पदे च। अन्तःपदे नानापदे च यौ तौ विधायकावुक्तौ तौ स्वरावुत व्यञ्जनाविति। शृणु। ऋऌस्वरसदृशौ व्यञ्जनावर्द्धमात्रका-विति ब्रूमः। तौ स्वरभक्तिरित्यन्येषु पदेषु प्रसिद्धौ। न चैतौ वर्णौ रेफलकारयोरूष्मणां च मध्यवर्त्तिनावपि सन्तौ संयो-गस्य विघातं कुरुतः। स्वरसदृशत्वात्। तथा चाह शौनकः। "न संयोगं स्वरभक्तिर्विहन्ति" यथा (३अ० ३९क०) गार्ह-पत्यः। अत्र हकाररेफयोरन्तरावपि स्वरभक्तिः सती रेफह-कारयोः संयोगं न विहन्ति। एवमन्यत्रापि द्रष्टव्यम्। (१२अ० ८९क०) अर्श्सऽउपचितामसि। (५अ० ४३क०) शतवल्शः।

(२३अ० ५१क०) उपवल्हामसि त्वा। पदमध्योदाहरणम् (२अ० ८क०) वेर्ह्निम्। (२२अ० ११क) सवितुर्हवामहे। स्वरोदय इति किम्। (२१अ० ४३क०) प्राश्नुतः। (२८अ० १क०) दिवो यर्मान्। (२५अ० १क०) मृदुं वस्वैः। (२५अ० ८क०) अस्तुभिर्ह्रादुनीः॥

## प्रगृह्यं चर्चायामितिना पदेषु॥ १८॥

प्रगृह्यसंज्ञकं यत्पदं तच्चर्चायां परभूतायामितिना आगमिकेन व्यवधीयते। चर्चाशब्देन इतिकरणात्परतो या तस्यैव पदस्य द्विरुक्तिः सोच्यते। पदेष्वित्यधिकारार्थं वचनम्। इतः प्रभृति पदाधिकारो वर्त्तते। यथा (१७अ० ८४क०) हेऽइति हे। शीर्षेऽइति शीर्षे। (४अ० २२क०) अस्मेऽइत्यस्मे। त्वेऽइति त्वे॥

## रिफितं च संहितायामनिरुक्तम्॥ १९॥

रिफितं चशब्दादितिना आगमिकेन व्यवधीयते चर्चायां परभूतायां संहितायामनिर्ज्ञातरेफं यत्। यथा (४अ० १५क०) पुनरिति पुनः। (३अ० ३६क०) स्वरिति स्वः। संहितायामनिरुक्तमिति किम्। (४अ० १५क०) पुनः। मनः॥

## पदावृत्तौ चान्तरेण॥ २०॥

पदस्यावृत्तिर्द्विरुक्तिः तस्यां पदावृत्तौ सत्यां अन्तरेण इति भवति सा च नोक्ता अतस्तत्प्रतिपादनार्थमाह॥

## क्रमोक्तावृत्तिः पदेषु॥ २१॥

क्रमशास्त्रे या पदावृत्तिरुक्ता सा पदेष्वपि भवति। क्रमशास्त्रातिदेशोऽयम्। तत्र चैतदुक्तमग्रे। "स्थितोपस्थितमवग्रहस्यान्तःपददीर्घीभावे" "विनामे" "प्रगृह्ये" "रिफिते

निवृत्तौ"। अवग्रहे यथा (१अ॰ १क॰) प्र_जावतीरिति प्र_जा। वती(:। अन्तःपदे दीर्घीभावे यथा (१७अ॰ ५१क॰) मामहान:) ममहानऽइति ममहान:)। विनामे च भवति। यथा (१८अ॰ २क॰) सुषावं। सुसावेति सु। सावं। प्रगृह्ये यथा (३अ॰ १३क॰) इन्द्राग्नीऽइतीन्द्राग्नी। रिफिते निवृत्तौ भवति यथा (४अ॰ १५क॰) पुन_रिति पुन ÷। प्रा_णाः) ॥

## सुपदावसानवर्जम् ॥ २२ ॥

क्रमोक्तावृत्तिः पदेष्वित्युक्तम्। तस्यायमपवादः। सुपदावसाने वर्जयित्वाऽन्यत्र क्रमोक्तावृत्तिर्भवति। तत्र "सुपदे शाकटायन:" इति शाकटायनमतेनावृत्तिः। सा च कतमाना भवति। अवसाने तु सर्वशाखिनामावृत्तिर्भवति। तदुभयं निषिध्यते ॥

## अनितावन्तर्विकारागमं प्रागुक्त्वा ॥ २३ ॥

"अनितावध्याय:" इत्यत आरभ्य यावदध्यायपरिसमाप्तिरस्मिन्नन्तराले यस्य पदस्य अन्तरा विकार आगमो वा विहितस्तदन्तर्विकारागमं पदं पूर्वमुक्त्वा पश्चात्पदावृत्तिः कर्त्तव्या। स्थितोपस्थितं कर्त्तव्यमित्यर्थः। तत्र चोपचरितषत्वणादि विकारजातमुक्त्वा। यथा (१॰अ॰ २६क॰) श्रेयस्कर। श्रेयं÷ करिति श्रेयं ÷। कर। (१८अ॰ २क॰) सुषावं। सुसावेति सु। सावं। (८अ॰ ४८क॰) प_रमेष्ठी। प_रमेस्थीति परमे। स्थी। (७अ॰ ३८क॰) वृष्टिमाँ २॥ऽ इव। वृष्टिमानिवेति वृष्टिमान्। इव। अनितावन्तर्विकारागममिति किम्। अस्यावधेरधस्तादुपरिष्टाच्च प्राग्वचनं मा भूत्। यथाऽवधेरधस्ताद्भवति। "विसर्जनीय:"। "चक्षुषो: षम्"। दुष्टरावनऽइति दु:। स्तवन:)। "तथयो: सम्"। तवस्तरमिति तवं ÷। तरम्। एवमादि।

अथोपरिष्टादवधेर्दर्शयिष्यामः। "अनुस्वारठं० रोभस्तु मकारः"। सठं० मूमिति सम्। सम्। "नुश्वान्तः पदेऽरेफे"। पूपिवाठंमऽइति पपि। वाठंस:। संस्कृतिः। अस्यावधेर्बहिर्यथा संहितायां पदे भवतीत्यर्थः॥

## विश्पतीवेति च॥ २४॥

विश्पतीवेत्येतच्च पदं प्रागुक्ता पश्चात्पदावृत्तिः कर्त्तव्या। वेष्टक इत्यर्थः। यथा (३३अ० ४०क०) आ विश्पतीव। विश्पतीऽइवेति विश्पती। इव। एतत्पदमस्यावधेर्बहिरन्तः प्रागुक्तिरुच्यते॥

## स्वरश्छकारे चकारेण सर्वत्र॥ २५॥

स्वरो व्यवधीयते छकारे प्रत्यये परभूते चकारेणागामिकेन सर्वत्र संहितायां पदे च। यथा (१६अ० ४क०) अच्छा वदामसि। (३५अ० १७क०) यच्छा नः शर्म सप्रथाः। पदेषूदाहरणं यथा (१५अ० ५क०) आच्छच्छन्दः। प्रच्छच्छन्दः। (१७अ० ४६क०) वर्मणाच्छादयामि। संहितोदाहरणम् (१५अ० ४क०) ककुप्छन्दः। पदाधिकारात्पदेष्वेव चकारेण व्यवधानं माभूदिति सर्वत्र ग्रहणात्संहितापदक्रमेष्वपि भवति॥

## यस्यातिहायसहेति न॥ २६॥

यस्य अतिहाय सह इत्येतैः पदैरुपहितः स्वरः छकारे प्रत्यये न चकारेण व्यवधीयते। यस्य यथा (२५अ० ११क०) यस्य छाया। अतिहाय यथा (२५अ० ११क०) अतिहाय छिद्रा गात्राणि। सह यथा (३४अ० ४८क०) सह स्तोमाः सह छन्दसः॥

विश्वाऽऊष्मान्तं परिद्विषस्त्वं त्वां यदयो

विराजत्यनिराऽअवीवृधन् परिष्ठाः सुचितयऽआ-शाऽओषधीराभाह्यमीवा ह्नि मायास्तेऽसीतेषु ॥ २७ ॥

विश्वा इत्येतत्पदं अश्रान्तं भवति परिह्विषादिषु प्रत्ययेषु । परिह्विषशब्दे यथा (४अ० २९क०) येन विश्वाः परिह्विष÷ । त्वं यथा (६अ० २४क०) विश्वास्त्वम्अ जाऽउ पावरो ह । त्वां यथा (६अ० २४क०) विश्वास्त्वाम्अ जाऽउ पावरोहन्तु । यदजयो यथा (१९अ० ६९क०) विश्वा यदजयस्पृध÷ । विराजति यथा (२०अ० ७७क०) धियो विश्वा विराजति । अनिरा यथा (११अ० ४४क०) व्यस्यन्विश्वाऽअनिराः । अवीवृधन्यथा (१२अ० ४८क०) इन्द्रं विश्वाऽअवीवृधन् । परिष्ठा यथा (१२अ० ७५क०) अति विश्वाः परिष्ठाः । सुचितयो यथा (१२अ० १०७क०) विश्वाः सुचितयः पृथक् । आशा यथा (२७अ० ७क०) विश्वाऽआशाः प्रमुञ्चन् । ओषधीर्यथा (१८अ० ६६क०) पृष्टो विश्वाऽओषधी-राविवेश । आभाहि यथा (२७अ० १क०) विश्वाऽआभाहि प्र दिशश्चतस्रः । अमीवा यथा विश्वाऽअमीवाः । ह्निमाया यथा विश्वा ह्नि मायाः । ते यथा (३३अ० ६१क०) विश्वास्ते स्पृध÷ श्नथयन्त । असि यथा (३३अ० ६०क०) अभि विश्वा-ऽअसि स्पृध÷ । ननु "स्वरसंस्कारयोश्छन्दसि नियमः" इति स्वरसंस्कारावधिकृतौ वेदितव्यौ न चायं स्वरो न संस्कारः । अत्र हि इदमूष्मान्तं पदमिदं स्वरान्तं पदमित्येतदुच्यते । अप्रस्तुताभिधानमेतत् । उच्यते पदानां सन्दिह्यमानानां निश्चयो नैव दोषायेति तावत्पश्यामः । अतः साधुपदनिश्चय-सम्बद्धमिति । अनभिज्ञस्य बोधनार्थम् ॥

**पृथिव्या स्वरान्तम्० सम्भवः शुक्रो मन्थी पृथिवीं परो देवेभिरित्येतेषु ॥ २८ ॥**

पृथिव्या इत्येतत्पदं स्वरान्तं भवति सम्भवादिषु पदेषु परेषु। सम्भव यथा (४अ० १३क०) पृथिवी मा बिभ्रत पृथिव्या सम्भव। शुक्रो यथा (७अ० १२क०) मज्जुग्मानो दिवा पृथिव्या शुक्रः। मन्थी यथा (मज्जुग्मानो दिवा पृथिव्या मन्थी। पृथिवीं यथा (१५अ० ६क०) पृथिव्या पृथिवीम्। परो देवेभिर्यथा (१७अ० २६क) पृथिव्या परो देवेभिः। स्वरान्तमिति किम्। (११अ० ७१क०) नाभा पृथिव्याऽ समिधाने॥

**च विश्वा वो ब्रह्म विश्वा हरी युक्तास्ते शफानां जजान नु कमित्येतेष्विमा ॥ २९ ॥**

च विश्वादिषु प्रत्ययेषु परेषु इमा इत्येतत्पदं स्वरान्तं भवति। च विश्वा यथा (८क० २३क०) इमा च विश्वा भुवनानि। वो यथा (१९अ० ५३क०) इमा वो हव्या चकृमा जुषध्वम्। ब्रह्म यथा (१४अ० २क०) इमा ब्रह्म पीपिहि सौभगाय। विश्वा यथा (१७अ० १६क०) यऽइमा विश्वा भुवनानि जुह्वत्। हरी यथा (३३अ० ६८क०) इमा हरी वहतस्तानोऽअच्छ। युक्ता यथा (३४अ० १८क०) सवना कृतेमा युक्ता ग्रावाणः। ते यथा (२८अ० १६क०) इमा ते वाजिन्नव मार्जनानि। शफा यथा (२९अ० १६क०) इमा शफानां सनितुः। जजान यथा (१७अ० २८क०) न तं विदाथ यऽइमा जजान। नु कं यथा (२५अ० ४४क०) इमा नु कं भुवना सीषधाम॥

**हवेमोतेमा च॥ ३०॥**

हवेमा ज्ञतेमा एते च द्वे पदे यथागृहीतमेव स्वरान्ते भवतः। हवेमा यथा (२१अ० ८क०) शुतम्ने मित्रावरुणा हवेमा। ज्ञतेमा यथा (१७अ० २०क०) विश्वकर्मन्नुतेमा ॥

**विष्णो ते बभूव नासत्या भिषजा नऽआ-वोढं या देवा हविषो नो मृडातो नोऽअच्छ विमुञ्चेत्येतेषु ता ॥ ३१ ॥**

विष्णो इत्यादिषु प्रत्ययेषु परेषु ता इत्येतत्पदं स्वरान्तं भवति। विष्णो यथा (२अ० ६क०) ता विष्णो पाहि। ते यथा (२५अ० ४०क०) सर्वा ता ते ब्रह्मणा सूदयामि। बभूव यथा (१०अ० २०क०) परि ता बभूव। नासत्या यथा (२०अ० ७४क०) ता नासत्या सुपेशसा। भिषजा यथा (२०अ० ७५क०) ता भिषजा सुकर्मणा। नऽआवोढं यथा (२०अ० ८३क०) ता नऽआवोढमश्विना। या देवा यथा (२१अ० ५७क०) इति ता या देवा देवदानानि। हविषो यथा (२५अ० ३८क०) सुचेव ता हविषोऽअध्वरेषु। नो मृडातो यथा (३३अ० ५५क०) ता नो मृडा तऽईदृशे। अच्छ यथा (३३अ० ६८क०) इमा हरी वहतस्ता नोऽअच्छ। विमुञ्च यथा (१७अ० २२क०) नियुद्भिर्वायविह ता विमुञ्च ॥

**ता ता च ॥ ३२ ॥**

एतौ च ता ता शब्दौ पदावयवभूतौ स्वरान्तौ भवतः। यथा (२५अ० ४२क०) ता ता पिण्डानां प्रजुहोम्यग्नौ ॥

**धिषाग्रा वरिवो विदं धिषाग्रा युवमिति च ॥ ३३ ॥**

एतौ च यथागृहीतौ धिषाग्राशब्दौ स्वरान्तौ भवतः।

यथा (२०अ० ७३क०) धिष्ण्या। वरिवो विदम्। यथा (२५अ० १५क०) तदश्विना शृणुतं धिष्ण्या युवम्। इतिशब्दः पदाधिकारप्रकरणसमाप्तिज्ञापनार्थः॥

## भाव्युपधश्चरिह्विसर्जनीयः॥ ३४॥

भावी उपधाभूतो यस्य स भाव्युपधः कोऽसौ विसर्जनीयः। रिह्विसर्जनीयश्च "विसर्जनीयो रिफित" इत्यत आरभ्य यः परिभाषितः एतौ विसर्जनीयावधिकृतौ वेदितव्यौ। अधिकारसूत्रमेतत्॥

## रेफे लुप्यते दीर्घश्चोपधा॥ ३५॥

रेफे प्रत्यये लुप्यते विसर्जनीय उभयरूपोऽपि भाव्युपधो रिह्विसर्जनीयश्च उपधाभूतस्य स्वरो दीर्घमापद्यते। भाव्युपधो भवति यथा (२४ अ० ३८क०) रुरुः रौद्रः। रुरू रौद्रः। कार्यं÷। (७अ० १६क०) मतिभिः रिहन्ति। मतिभी रिहन्ति। रिह्विसर्जनीयो भवति। यथा प्रातः रात्रिः। प्रातारात्रिः। पुनः रक्तम्। पुनारक्तम्। रूपोदाहरणमेतत्। उपरितनसूत्रे प्रयोजनं भविष्यति। भावीत्यादि किम्। (१६अ० ५०क०) परिणो रुद्रस्य॥

## रेफꣳ स्वरधौ॥ ३६॥

रेफमापद्यते उभयरूपो विसर्जनीयः स्वरेषु परभूतेषु धिसंज्ञकेषु च परभूतेषु। स्वरे भवति यथा (८अ० ३१क०) अग्निः एकाक्षरेण। अग्निरेकाक्षरेण। (३४अ० ३४क०) प्रातः अग्निम्। प्रातरग्निम्। प्रातः इन्द्रम्। प्रातरिन्द्रम्। धिसंज्ञकेषु भवति यथा (३अ० १५क०) विरुरुचुः वनेषु। विरुरुचुर्वनेषु। (८अ० ६क०) सवितः वामम्। वाममद्य सवितर्वामम। भावीत्यादि किम्। दिवो मूर्द्धा॥

## कण्ठ्यपूर्वो यकारमरिफितः ॥ ३७ ॥

अवर्णः कण्ठ्यः अवर्णपूर्वो विसर्जनीयो अरिफितो यकारमापद्यते। स्वरेषु यथा (२४अ० ३९क०) श्वित्रः आदित्यानाम्। श्वित्रयादित्यानामित्येवं स्थिते यवयोः पदान्तयोरित्यादिना यकारलोपः। ततः श्वित्रऽआदित्यानामिति रूपं सिध्यति। (१७अ० ९२क०) इन्द्रः एकम्। इन्द्रऽएकं० सूर्य्यम्। (१२अ० ७५क०) याः ओषधीः। याऽओषधीः पूर्वा+। (१२अ० ८९क०) याः अफलाः। याऽअफलाऽअपुष्पाः) ॥

## लोपमन्यौ ॥ ३८ ॥

अरिफितः कण्ठ्यपूर्वो विसर्जनीयो लोपमापद्यते धिसंज्ञकेषु प्रत्ययेषु। यथा (१अ० १क०) अयक्ष्माः मा। अ_यक्ष्मा मा व+। १अ० २४क०) शततेजाः वायुः। शततेजा वायुरसि। अरिफित इति किम्। (१अ० २क०) मा ह्वार्मा ते यज्ञपतिः ॥

## भूमेश्चाकारेऽपृक्ते ॥ ३९ ॥

भूमिशब्दसम्बन्धी विसर्जनीयो लुप्यते। आकारेऽपृक्तसंज्ञके परे। यथा (२९अ० १६क०) भूमिः आददे। द्विविमद्भूम्याददे। आकारेऽपृक्ते इति किम्। (२३अ० १०क०) भूमिरा वपनम्म_हत् ॥

## यकाराकारयोर्जास्पत्ये पदे ॥ ४० ॥

जास्पत्ये पदे यकारस्य च लोपो भवति। जायास्पत्यमिति प्राप्ते यकाराकारयोर्लोपे कृते जास्पत्यमिति रूपं

भवति। यथा (३३अ० १२क०) सन्न॑स्तुत्यठं० सुयम॒मा सं॑शुष्व ॥

## अलोपो माँस्पचन्याः ॥ ४१ ॥

अकारलोपो माँस्पचनीशब्दे द्रष्टव्यः। माँस्पचनी इति प्राप्ते यथा (२५अ० २६क०) य॒न्नीक्ष॑णं मा॒ँस्पच॑न्याः॥

## सर्वो अकार ओकारम् ॥ ४२ ॥

सर्वः अकारः ओकारमापद्यते। सर्वग्रहणात्सोपधो विसर्जनीयो धिसंज्ञकेषु प्रत्ययेषु। यथा (१अ० १क०) अघशठं०सः ध्रुवाः। (१अ० २क०) मातरिश्वनः घर्मः। मा॒त॒रिश्व॑नो घ॒र्मः। अरिफित इति किम्। (४अ० १५क०) पुन॒र्मन॑ ÷ ॥

## अकारे च ॥ ४३ ॥

अकारे च प्रत्यये सर्वो अकार ओकारमापद्यते। यथा (२अ० २१क०) वे॒दः॑ अ॒सि। वे॒दोऽसि। (१अ० १२क०) अ॒ग्रे॒ गु॒वोऽअ॒ग्र॒ पु॒वः। अरिफित इति किम्। (१२अ० ८क०) पुन॑रग्ने। (४अ० १५क०) पुन॒रायु॑ ÷ ॥

## एषो ह च ॥ ४४ ॥

एष इत्ययं विसर्जनीय ओकारमापद्यते ह इत्येतस्मिन् पदे प्रत्यये। यद्यप्यत्र "एष च" इत्यनेन एषशब्दस्य व्यञ्जनमात्रे विसर्जनीयलोपो विहितः तेनात्र ओकारो निपात्यते। यथा (३२अ० ३क०) ए॒षो ह॑ दे॒वः॥

## स्वो रुहावहस्य रात्र्याम् ॥ ४५ ॥

स्वरित्ययं विसर्जनीयो रुहौ प्रत्यये ओकारमापद्यते। अहरित्ययं च रात्रिप्रत्यये। यथा। (११अ० २२क०) स्वः रुहाणाः। स्वो॒ रुहा॑णाऽअधि॒नाक॑म् स्वः रोहाव। जाय-

ऽएहि स्वो रोहाव (२१अ० २२क०) अहः रात्रे। श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे। (१८अ० २३क०) अ॒हो रा॒त्रे-ऽऊ॑र्वष्ठीवे। (२७अ० ४५क०) अ॒हो रा॒त्रास्ते॑ कल्पन्ताम् ॥

## स्वरे भाव्यन्तस्थाम् ॥ ४६ ॥

स्वरेऽसवर्णे प्रत्यये भावी अन्तस्थामापद्यते। यथा (३अ० ५८क०) त्रि अम्बकम्। त्र्य॑म्बकं यजामहे। (११अ० ४४क०) वाजी अर्वन्। आ॒शु॒र्भ॑ऽव वा॒ज्यर्व॑न्। (११अ० ७०क०) द्रु अन्नः। द्रु॑न्न॒ः स॒र्पिरा॑सुति॒ः। (११अ० ४४क०) वीडु अङ्गः। स्थि॒रो भ॑व वी॒ड्व॑ङ्ग॒ः ॥

## सन्ध्यक्षरमयवायावम् ॥ ४७ ॥

ए ओ ऐ औ एतानि च यथाक्रमं स्वरे प्रत्यये अय् अव् आय् आव् द्विवर्णमापद्यते। यथा (३अ० २७क०) इडे आ इहि। इड॒ऽएहि॑। (४अ० २७क०) क्रशानो एते। क्रशान-वे॒ते। (२५अ० १क०) सरस्वत्यै अग्रजिह्वम्। सरस्वत्याऽअग्र-जि॒ह्वम्। (१०अ० १६क०) हिरण्यरूपौ उषसः। हिर॑ण्यरूपा-उ॒षस॒ः। अत्र च "यवयोः पदान्तयोः" इत्यादिना यकार-वकारलोपः। "न वकारस्यासस्थानऽएकेषामिति" न वकारस्य लोपः।

## उदात्तस्यान्तस्थीभावे स्वरितं परमनुदात्तम् ॥ ४८ ॥

उदात्तस्य स्वरस्यान्तस्थापत्तौ सत्यां परं यदनुदात्तमक्षरं तत् स्वरितं भवति। (३अ० ५८क०) त्रि अम्बकम्। त्र्य॑म्बकम्। (३३अ० ८८क०) देवी एतु। दे॒व्ये॑तु सूनृता॑। (११अ० ७०क०) द्रु अन्नः। द्रु॑न्न॒ः। (३अ० ५२क०) नु इन्द्र। यो॒जान्विन्द्र।

ननु "सुवर्णौ यवौ चैव" इत्यत्र स्वरितो विहितः पुनः किमर्थ-मिदमुच्यते "स्वरितं पदं परमनुदात्तमिति" द्वयोः स्वरयोः सन्धावयं स्वरितो निगद्यते तत्र न ज्ञायते किं पूर्वस्य स्वरस्य स्थाने स्वरित उत उत्तरस्य तत्र यत्परमक्षरं अनुदात्तं तत् स्वरितं भवतीति सूत्रारम्भार्थः ॥

## कण्ठ्य ऋकारे ह्रस्वम् ॥ ४९ ॥

कण्ठ्यः स्वरः ऋकारे प्रत्यये ह्रस्वस्वरमापद्यते । यथा (१३अ० ५८क०) विश्वकर्मा ऋषिः । विश्वकर्म ऽऋषिः । (२१अ० ४०क०) स्वाहा ऋषभम् । स्वाह ऽऋषभमिन्द्राय । (१५अ० ४९क०) येन ऋषयः । येन ऽऋषयस्तपसा । (१८अ० ५२क०) यत्र ऋषयः । यत्र ऽऋषयो जग्मुः । ह्रस्वस्य स्थाने ह्रस्वो विधीयमानोऽन्यस्याः संहिताया निवृत्तिं करोति विवृत्तिसंहितैवात्र भवति न स्वरसंहिता ॥

## अथैकमुत्तरस्य ॥ ५० ॥

अथानन्तरमुत्तरो वर्णः चशब्दात् पूर्वस्य एकं वर्णं विकार-भूतमापद्यते, इत्येतदधिकृतं वेदितव्यम् ॥

## सिम० सवर्णे दीर्घम् ॥ ५१ ॥

"सिमादितोऽष्टौ स्वराणाम्" इत्युक्तम् । सिम्संज्ञकः स्वरः सवर्णे स्वरे प्रत्यये परे पूर्व उत्तरस्य एकं वर्णं दीर्घमाप-द्यते । यथा (१अ० १क०) प्र अर्पयतु । प्रार्पयतु । (२६अ० २३क०) तव अयम् । तवायम् । (२०अ० ८१क०) नासत्या अश्वावत् । नासत्याश्वावत् । (२०अ० ७९क०) सुचि इव । सुचीव घृतम् । (१२अ० ६क०) हि इम् । वि हीमिव ऽ । (२अ० १५क०) अनु उत् । अनूत्पम् ॥

## अनुनासिकवत्यनुनासिकम् ॥ ५२ ॥

अनुनासिकवत्येकीभावे पूर्वस्य परस्य एकमनुनासिकमापद्यते। यथा (१५अ० १८क०) उप अꣳशुः। उपाꣳशुःऽ। (१७अ० ८८क०) उप अꣳशुना। उपाꣳशुना समंमृतत्वम्। "अनुनासिका चोपधा" इत्यादिना एकस्मिन् पक्षे उपधाऽनुनासिक्यं एकस्मिन् पक्षे अनुस्वारो विहितः। तत्र यस्मिन् पक्षे उपधाऽनुनासिक्यं तमधिकृत्योच्यते। एतदनुनासिकवत्यनुनासिकमिति ॥

## कण्ठ्यादिवर्ण एकारम् ॥ ५३ ॥

कण्ठ्यात्पर इवर्णः पूर्वस्वरस्य परस्य कण्ठ्य एकमेकारं वर्णमापद्यते। यथा (१८अ० ४८क०) वरुण इह। वरुणेह बोधि। (४अ० १क०) आ इदम्। एदमगन्म ॥

## उवर्ण ओकारम् ॥ ५४ ॥

कण्ठ्यादुत्तरे उवर्णे कण्ठ्य उवर्णश्चैकमोकारमापद्यते। यथा (१अ० १क०) त्वा ऊर्जे। त्वोर्जे। (२अ० ३क०) त्वा उत्तरतः। मित्रावरुणौ त्वोत्तरतःऽ ॥

## समुद्रस्येमँस्त्वे मँस्त्वोद्मन्निति च ॥५५॥

"सन्ध्यक्षर ऐकारौकारौ" इति वक्ष्यति तस्य पुरस्तादपवादभूत उत्तरसन्ध्यक्षरस्वरूप एकादेशो निपात्यते। यथा (१३अ० १७क०) समुद्रस्य एमन्। समुद्रस्येमन्। (१३अ० ५३क०) त्वा एमन्। अपान्त्वेमन् (१३अ० ५३क०) त्वा ओद्मन्। अपान्त्वोद्मन् ॥

## एजत्योजोरेकेषाम् ॥ ५६ ॥

अवर्णात् पूर्वस्मादेजत्योजोःप्रत्यययोरेकेषामाचार्याणाम-

तेन उत्तरसवर्ण आदेशो भवति। यथा (४०अ० ६क०) न एजति। नेजति। ओजः यथा (३६अ० १क०) सह ओजः। वागोज+ मुहोज+। एकेषामिति किम्। तदेजति तन्नै-जति। वागोज+ मुहोज+॥

## सन्ध्यक्षर ऐकारौकारौ॥ ५७॥

अवर्णः सन्ध्यक्षरे प्रत्यये पूर्व उत्तरश्च एकमक्षरमापद्यते। ऐकारम्। औकारञ्च। अत्र चत्वारि सन्ध्यक्षराणि द्वावेतौ विकारौ ऐकारौकारौ तत्र यथासम्भवात् "विकारौ यथासन्नम्" इति एकारे ऐकारे च प्रत्यये ऐकारो भवति। ओकारे औकारे च प्रत्यये औकारो भवति। एकारे भवति यथा (२२अ० ३४क०) स्वाहा एकताय। स्वाहैकताय। ऐकारे भवति यथा (१९अ० १८क०) इन्द्राय ऐन्द्रम्। इन्द्रायैन्द्रम्। ओकारे भवति यथा (८अ० ३९क०) इन्द्र ओजिष्ठ। इन्द्रौजिष्ठ। औकारे भवति यथा (३१अ० ६क०) प्र औचन्। प्रौचन्॥

## वाहौ च स्वरभूते॥ ५८॥

वाहौ च प्रत्यये स्वरभूते पूर्वः कण्ठ्य उत्तरश्च वाहः सम्बन्धी उवर्ण एकमौकारमापद्यते। यथा (१८अ० २६क०) तुर्य्य ऊहौ। तुर्य्यौहौ। (१८अ० २७क०) पष्ठ ऊहौ। पष्ठौहौ। स्वरभूत इति किम्। (१८अ० २७क०) पष्टवाट्च मे। "उवर्ण ओकारम्" इत्यस्यायमपवादः॥

## आरम्ऋकारोऽपृक्तात्॥ ५९॥

अपृक्तात्पदात्पर ऋकार आरमापद्यते सहापृक्तेन। यथा (३०अ० ९क०) आ ऋत्यै। आर्त्यै परिवित्तम्। अत्र स्वरो रेफस्याकारमारोहति॥

## ऌकारश्चाल्कारम् ॥ ९० ॥

इदं सूत्रं केचिन्न पठन्ति व्यर्थत्वात् । ऌकारश्चाल्कारमापद्यते । आ ऌकारः । आल्कारः ॥

## एदोद्भ्यां पूर्वमकारः ॥ ९१ ॥

एकारौकाराभ्यां परं अकारः पूर्वरूपमापद्यते । यथा (१८अ० ५७क०) ते अवन्तु । तेऽवन्तु_स्मान् । (२४अ० ३७क०) ते अप्सरसाम् । तेऽप्स_रसाम् । (२अ० २१क०) वेदः असि । वेदोऽसि । (२अ० २क०) स्तुपः असि । स्तुपोऽसि । "सर्वो अकार ओकारम्" । "अकारे च" इत्यनेन च ओकारः ॥

## तौ चेदुदात्तावनुदात्ते स्वरितौ ॥ ९२ ॥

तौ यदि एकारौकारौ उदात्तौ भवतः तदाऽनुदात्ते अकारे परे स्वरितौ भवतः । यथा वेदो असि । वेदोऽसि । स्तुपो असि । स्तुपोऽसि । ते अप्सरसाम् । तेऽप्स_रसाम् । "एदोद्भ्यामकारो लुगभिनिहितः" इति स्वरितत्वं विहितमेव । इह त्वपवादार्थं तदुच्यते ॥

## न देवे भवति ॥ ९३ ॥

देवे इत्ययमेकारः अभवदित्येतस्मिन् प्रत्यये न स्वरितो भवति । यथा (३४अ० ११क०) देवे अभवत् । सो देवेऽभवत्स्वरित ॥

**गाहमानः शिवो भरन्तो इषोऽभ्यो जम्भयन्तो वाजे वाजजितो मदन्तः शोचेऽवसे सुषुवे ज्योते सुपर्णो वीरुधः सुवीरो धातवे सूनवे दूणानऽआशवो वहतः सङ्क्रन्दनो बाहवोऽयुध्योऽद्रुहः ॥९४॥**

एतेभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयते। अभिनिधानं च पूर्वरूपता। गाहमानो यथा (१७अ० ३८क०) गाहमानोऽद्रयः। शिवो यथा (३अ० ६१क०) अहिंसं सन्नः शिवोऽतीहि। भरन्तो यथा (११अ० ७५क०) भरन्तोऽश्वायेव तिष्ठते। द्वेषोभ्यो यथा (५अ० ३५क०) द्वेषोभ्योऽन्यकृतेभ्यः। जम्भयन्तो यथा (८अ० १६क०) जम्भयन्तोऽहिम्। वाजे यथा (८अ० १८क०) वाजेवाजेऽवत। वाजजितो यथा (८अ० १३क०) वाजजितोऽध्वनः। मदन्तो यथा (११अ० ७५क०) मदन्तोऽग्ने मा ते। शोचे यथा (१२अ० २६क०) भद्रशोचेऽपपम्। अवसे यथा (८अ० २६क०) अवसेऽग्निमन्वारभामहे। सुषुवे यथा (८अ० २३क०) सुषुवेऽग्रेसोमम्। ज्योते यथा (८अ० ४३क०) ज्योतेऽदिति सरस्वति। सुपर्णो यथा (१२अ० ४क०) सुपर्णोऽसि गरुत्मान्। वीरुधो यथा (१२अ० ६४क०) वीरुधोऽस्मैसन्दत्त। सुवीरो यथा (४अ० ३७क०) सुवीरोऽवीरहा। धातवे यथा (३८अ० ५क०) सरस्वति तमिह धातवेऽकः। सूनवे यथा (३अ० २५क०) सूनवेऽग्ने सूपायनो भव। दूणानो यथा (१३अ० ८क०) दूणानोऽस्तासि। आशवो यथा (१५अ० ४१क०) आशवोऽस्तम्। वहतो यथा (८अ० ३५क०) वहतोऽप्रतिधृष्टशवसम्। सङ्क्रन्दनो यथा (१७अ० ३३क०) सङ्क्रन्दनोऽनिमिषः। बाहवो यथा (१७अ० ४६क०) बाहवोऽनाधृष्या यथासथ। अयुध्यो यथा (१७अ० ३९क०) अयुध्योऽस्माकं सेनाः। अद्रुहो यथा (१२अ० ५०क०) अद्रुहोऽनमीवाऽइषो मही। ननु "एदोङ्भ्यां पूर्वमकारः" इत्यनेनैवाभिनिहितः सिद्धः किमर्थं गाहमानादिभ्य उत्तरस्याकारस्याभिधानमुच्यते। नैवाभिनिहितः सिद्धः "प्रकृतिभाव स्तु" इति प्रकृतिभावमस्तु वक्ष्यति तस्यायं पुरस्तादपवादः॥

वोऽहठं० सोऽहठं० सोऽस्माकं तेऽभिगरो वोऽर्वाची ॥ ६५ ॥

एते द्विपदा यथागृहीतमेवाभिनिधीयन्ते । वोऽहं यथा (९अ० ४क०) तेषाँ विशिप्रियाणां वोऽहम् । सोऽहं यथा (१८अ० ३५क०) सोऽहँवाजम् । सोऽस्माकं यथा (१२अ० १०१क०) उपस्थिरस्तु सोऽस्माकम् । तेऽभिगरो यथा (८अ० ४७क०) अनुष्टुप्तेऽभिगरः ऽ । अर्वाची यथा ( ८अ० ४क० ) आवोऽर्वाची सुमतिःऽ ॥

येऽन्नाचयोः ॥ ६६ ॥

ये इत्येतस्मात् परयोः अन्नात्तसम्बन्धी अकारोऽभिनिधीयते । अन्न यथा (१६अ० ६२क०) येऽन्नेषु । अत्र यथा (१२अ० ४५क०) येऽत्र स्थ पुराणा ये च नूतनाः ॥

अविद्याऽसम्भूत्योश्च ॥ ६७ ॥

अविद्या असम्भूतिसम्बन्धी अकारोऽभिनिधीयते । चशब्दात् ये इत्येतस्मात् परः । अविद्या यथा (४०अ० १२क०) येऽविद्यामुपासते । असम्भूतिं यथा (४०अ० ९क०) येऽसम्भूतिमुपासते । इत्येतयोरिति किम् (१६अ० ८क०) यथो येऽस्य सत्वानः ॥

उपस्थेऽन्तस्तेभ्योऽकरम् ॥ ६८ ॥

एतौ च द्विपदौ यथागृहीतमेवाऽभिनिधीयेते । उपस्थेऽन्तो यथा (१२अ० ३९क०) शिवे मातुर्यथोपस्थेऽन्तरस्याम् । तेभ्योऽकरं यथा (१६अ० ८क०) अहन्तेभ्योऽकरन्नमः ॥

नमोऽस्त्वसौवामण्याम् ॥ ६९ ॥

नमोऽस्तु एतच्च द्विपदं यथागृहीतमेवाभिनिधीयते ।

सौत्रामण्यां चेन्न भवति। यथा (१३अ० ६क०) नमोऽस्तु सर्पेभ्यः। असौत्रामण्यां किम्। (१८अ० ६८क०) नमोऽस्त्वस्य ये॥

## विश्वेऽग्ने विशो रायोऽनग्नौ ॥ ७० ॥

विश्वे इत्यादिभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयतेऽग्नौ चेन्न भवति युञ्जानः प्रथममित्यत आरभ्य स्वाहेत्यन्तं यावदग्निरुच्यते। विश्वे यथा (८अ० १८क०) विश्वेऽस्तु मम्। अग्ने यथा (९अ० ७क०) तेऽग्नेऽश्वमयुञ्जन्। विशो यथा (७अ० २५क०) अथा नऽइन्द्रऽइद्विशोऽसपत्नाः। रायो यथा (८अ० १५क०) त्वष्टा सुदत्रो विदधातु रायोऽनु। अनग्नाविति किम्। (१८अ० ३१क०) विश्वेऽद्य मरुतः। (१३अ० १क०) मयि गृह्णाम्यग्रेऽअग्निम्। (१३अ० ११क०) भवा पायुर्विशोऽअस्याः। (१२अ० १०९क०) अग्ने रायोऽअमर्त्य॥

## सूर्य्योऽग्नेऽभौ ॥ ७१ ॥

सूर्य्यो अग्ने इत्येताभ्यां परः अभिशब्दस्याकारोऽभिनिधीयते। सूर्य्यो यथा (१३अ० ३०क०) सूर्य्योऽभितापीत्। अग्ने यथा (१२अ० ७क०) अग्नेऽभ्यावर्त्तिन्। अभाविति किम्। (३१अ० १२क०) चक्षोः सूर्य्योऽअजायत। (९अ० २९क०) अग्नेऽअच्छा वदेह नः॥

## रिषो यवसे पुरुप्रियोऽन्नपतेऽर्णवे ॥ ७२ ॥

एतेभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयते। रिषो यथा (११अ० ६८क०) मा सुरिषोऽस्य। यवसे यथा (१५अ० ६२क०) प्रोक्षुद्यो न यवसेऽविष्यन्। पुरुप्रियो यथा (११अ० ७२क०) पुरुप्रियोऽग्ने। अन्नपते यथा (११अ० ८३क०) अन्न-

एतेऽस्नस्य । अर्णवे यथा (१६अ० ५५क०) अर्णवेऽन्तरिक्षे भवाः ॥

व्यपरे च ॥ ७३ ॥

एकारौकारेभ्यः परोऽकारोऽभिनिधीयते। स चेदकारो वकारपरो यकारपरो वा भवति। यथा (१६अ० ५४क०) सहस्रयोजनेऽवधन्वानि। (१२अ० ६३क०) तिग्मतेजोऽयस्मयम् ॥

गवे मे मनसो वाजयन्तः सोम्यासः पाशिनो विदानोऽन्तते मूजवतो त्वष्णोऽपाको दीदिवस्त्वयस्विठं०शे ब्रह्मणे यको रथो विश्वतः पादो वसन्तः ॥ ७४ ॥

एतेभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयते। गवे यथा (३अ० ५९क०) गवेऽश्वाय। मे यथा (२०अ० ८क०) विश्वो मेऽङ्गानि। मनसो यथा (२०अ० ३४क०) मनसोऽसि विलायकः। वाजयन्तो यथा (१८अ० ७४क०) वाजयन्तोऽश्वाम। सोम्यासो यथा (१९अ० ५८क०) सोम्यासोऽग्निष्वात्ताः। पाशिनो यथा (२०अ० ५३क०) पाशिनोऽसि धन्वेव। विदानो यथा (१९अ० ५४क०) संविदानोऽनु द्यावापृथिवी। अन्तते यथा (१९अ० ७७क०) अश्रद्धामनृतेऽदधात्। मूजवतो यथा (३अ० ६१क०) मूजवतोऽतीहि। त्वष्णो यथा (२०अ० ४४क०) त्वष्टाऽदधच्छुष्ममिन्द्राय त्वष्णोऽपाकः। अपाको यथा (२०अ० ४४क०) अपाकोऽचिष्टुर्यशसे। दीदिवो यथा (१७अ० ९क०) स नः पावक दीदिवोऽग्ने। त्वयस्विठं०शे यथा (२१अ० २८क०) वयस्विठं०शेऽमृताः। ब्रह्मणे यथा (७अ० २१क०) शुक्रे ब्रह्मणेऽस्मै क्षत्राय। यको यथा (२३अ० २२क०) यको-

उसक्‍तौ पंक्वुन्तकः। रथो यथा (१अ० ३६क०) दृडभौ रथो-ऽस्मान्। विश्वतो यथा (२५अ० १४क०) विश्वतोऽदब्धासः। पादो यथा (३१अ० ३क०) पादोऽस्य विश्वा भूतानि। वसन्तो यथा (३१अ० १४क०) वसन्तोऽस्यासीत्॥

**अवोऽस्त्वग्ने गृहपतेऽभि सत्त्वानोऽहं नोऽजस्रया विमानोऽजस्रः सुतेऽश्विना नमोऽग्नये तेऽग्रं तेऽग्रे वृक्षस्य प्रथमोऽन्तस्तेऽन्येन॥ ७५॥**

एतेषां च द्विपदानां उत्तरपदादिर्यथागृहीतमेवाकारो-ऽभिनिधीयते। अवोऽस्तु यथा (३अ० ३१क०) महि त्रीणाम-वोऽस्तु। अग्ने गृहपते यथा (३अ० ३९क०) अग्ने गृहपते-ऽभि द्युम्नम्। सत्त्वानो यथा (१६अ० ८क०) अस्य सत्त्वानो-ऽहम्। नोऽजस्रया यथा (१७अ० ७४क०) पुरो नोऽजस्रया सूर्म्या यविष्ठ्य। विमानोऽजस्रो यथा (१८अ० ६८क०) विमा-नोऽजस्रो घर्मो हविः। सुतेऽश्विना यथा (२०अ० ५६क०) तनूपा भिषजा सुतेऽश्विनोभा। नमोऽग्नये यथा (२३अ० १३क०) ब्रह्मा क्षत्राय नोऽवतु। तेऽग्रं यथा (२३अ० २४क०) माता च ते पिता च तेऽग्रम्। तेऽग्रे वृक्षस्य यथा (२३अ० २५क०) तेऽग्रे वृक्षस्य क्रीडतः। वृक्षस्येति किम्। (९अ० ७क०) तेऽग्रेऽश्वमयुञ्जन्। प्रथमोऽन्तो यथा (२३अ० ६३क०) सुभूः स्वयम्भूः प्रथमोऽन्तः। तेऽन्ये यथा (२३अ० १५क०) महिमा तेऽन्येन॥

**पयायो जहीमोऽम्बिके॥ ७६॥**

पयायः जहीमः अम्बिके एतेभ्य एकारौकारेभ्यः परोऽका-रोऽभिनिधीयते। पयायो यथा (२५अ० १क०) अपो यन्तु

पृणन्तोऽसु॒ग्ना॥। जन्हीमो यथा (३५अ० १०क०) अश्वा जह्नी॑मोऽशिवा॒ य॒। अम्बिके यथा (२३अ० १८क०) अम्बेऽअम्बि॒के॑ऽम्बालिके॥

नो नुमोऽदुग्धाऽइव प्रचेतसोऽश्वान्नरोऽस्माकँ वृषपाणयोऽश्वाः प्रदिशोऽनूदितेऽनागाऽअन्धसोऽर्चा पनस्य तेऽद्य यज्ञियेभ्योऽमृतत्वँविपश्चितोऽभिर्जनोऽनमीवऽआयुवोऽनु नोऽद्य देशेऽभवद्द्युनेऽजनिष्ट विद्मनाऽपसोऽजायन्त पूर्व्यासोऽरेणवो नोऽस्मा नोऽदितिर्नोऽहिः॥७७॥

एते च द्विपदा यथागृहीतमेवाभिनिधीयन्ते। नो नुमोऽदुग्धा इव यथा (२७अ० ३५क०) अ॒भि त्वा शूर नो नु॒मोऽदुग्धाऽइव। प्रचेतसोऽश्वान् यथा (२९अ० ५०क०) अश्वाजा॒न् प्रचे॑तसोऽश्वान्। नरोऽस्माकं यथा (२९अ० ५७क०) नो॒ न॒रो॒ऽस्माकमिन्द्र। वृषपाणयोऽश्वा यथा (२९अ० ४४क०) वृषपाण॒योऽश्वा॒ रथे॑भिः। प्रदिशोऽनु यथा (३२अ० ४क०) प्र॒दिशोऽनु॒ सर्वाः। उदितेऽनागा यथा (३३अ० २०क०) य॒द॒द्य सूर॒ऽउ॒दि॒तेऽनागाः। अन्धसोऽर्चा यथा (३३अ० २३क०) अन्धसो॒ऽर्चा वि॒श्वान॑राय। पनस्य तेऽद्य यथा (३३अ० ३९क०) पन॑स्य ते॒ऽद्य दे॑वम॒द्य॒ २॥ऽ अ॑सि। यज्ञियेभ्योऽमृतत्वम् यथा (३३अ० ५४क०) य॒ज्ञिये॑भ्योऽमृत॒त्वꣳ सु॒वसि॑ भा॒गमु॒त्तमम्। विपश्चितोऽभिर्यथा (३३अ० ८१क०) पा॒व॒कव॑र्णाः शुचयो विप॒श्चि॒तो॒ऽभिस्तोमैः। जनोऽनमीवो यथा (३३अ० ८६क०) स॒वा॒ःइन्जनो॑ऽनमी॒वः। आयवोऽनु यथा (३३अ० ९७क०) आ॒यवो॒ऽनु॒ष्टुवन्ति। नोऽद्य यथा (३४अ० ९क०) अनु नो॒ऽद्यानु॑मतिः।

देवेऽभवद्यथा (३४अ० ११क०) सो देवेऽभवत्सरित्। वयुनेऽजनिष्ट यथा (३४अ० १४क०) इडायास्त्वो वयुनेऽजनिष्ट। विद्मनाऽपसोऽजायन्त यथा (३४अ० १२क०) विद्मनाऽपसोऽजायन्त मरुतः। पूर्व्यासोऽरेणवो यथा (३४अ० २७क०) पूर्व्यासोऽरेणवः सुकृताः। नोऽक्षमा यथा (२६अ० ४६क०) नोऽक्षमा भवतु नस्तनूः। नोऽदितिर्यथा (२६अ० ४६क०) अधि ब्रवीतु नोऽदितिः। नोऽह्निर्यथा (३४अ० ५३क०) उत नोऽह्निर्बुध्न्यः॥

## ब्राह्मणः॥ ७८॥

ब्राह्मण इत्येतस्मादोकारात्परोऽकारोऽभिनिधीयते। यथा (३१अ० ११क०) ब्राह्मणोऽस्य मुखम्॥

## यजुष्षु च॥ ७६॥

"गाहमानः" इत्यादिभिः सूत्रैर्ऋक्सम्बन्ध्यभिनिधानमुक्तम्। इदानीं यजुष्ष्वाह। यजुष्षु च विशेषेण एकारादोकाराच्च परोऽकारोऽभिनिधीयते। यथा (३१अ० ११क०) वेदः असि। वेदोऽसि। यथा (३१क० ११क०) कः असि। कोऽसि। यथा (३१अ० ११क०) ते अप्सरसाम्। तेऽप्सरसाम्॥

## सङ्क्रमे च सर्वत्र॥ ८०॥

गलत्पदमतिक्रम्यागलता सह सन्धानं सङ्क्रमः। "त्रिपदाद्यावर्त्तमाने सङ्क्रम" इति वक्ष्यति तत्र सङ्क्रमे एकारौकाराभ्यां परोऽकारोऽभिनिधीयते। चशब्दात् सर्वत्र यजुष्षु ऋक्षु च। यजुष्षु भवति यथा (२०अ० १४क०) शूद्रे यदर्य्ये। अत्र पदेषु सङ्क्रमो भवति। यथा (२०अ० १४क०) शूद्रेऽर्य्ये। (२५अ० १६क०) तार्क्ष्यः अरिष्टनेमिः। अत्र क्रमसंहिता-

यामभिनिहितो भवति। यथा (२५अ० १८क०) शुद्रे ऽर्थ्ये। तार्क्ष्योऽरिष्टनेमिः। ऋत्तु भवति यथा (१७अ० ८०क०) यज्ञः अभि। यज्ञोऽभि। सङ्क्रम इति किम् (२५अ० १८क०) स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः॥

## प्रकृतिभाव ऋत्तु ॥ ८१ ॥

"गाहमानादिभिः" सूत्रैर्ऋत्स्वभिनिहितोऽभिहितः। ततोऽन्यत्र ऋत्तु प्रकृतिभावो भवति। यथा (३अ० ११क०) उपप्रयन्तोऽअध्वरम्। आरेऽअस्मे च शृण्वते॥

## जुषाणस्त्वानध्वनि ॥ ८२ ॥

"यजुष्षु च" इत्यनेन सूत्रेण यजुष्ष्वभिनिधानमुक्तम्। तदपवादभूतमिदमारभ्यते। जुषाणशब्दसम्बन्धी ओकारः अनध्वनि प्रत्यये प्रकृत्या भवति। यथा (५अ० ३४क०) जुषाणोऽअप्तुराज्यस्य वेतु स्वाहा। अनध्वनीति किम्। जुषाणोऽध्वाज्यस्य वेतु स्वाहा। इदमुदाहरणं शाखान्तरीयम्॥

## ते चानुदात्तमनुदात्ते ॥ ८३ ॥

ते इत्येतत्त्व पदं अनुदात्तं चेत् प्रकृत्या भवति अनुदात्ते च प्रत्यये। यथा (५अ० ७क०) या तेऽअग्नेऽयः शया। अनुदात्तमिति किम्। (२४अ० ३७क०) तेऽप्सरसाम्॥

हेडऽआपो गुर्वोऽपाग्ने धीरासो देवासऽउरो रत्नाश्चो मो वैश्वानरो वृषभो वचः प्राणऽउदानोऽङ्गऽइमा मे वृष्णो दशमास्योऽन्धऽआविक्तोऽरिष्टोऽअर्जुनः प्रत्याश्रावः स्विष्टो घासे प्रणीतस्तेभ्यो नमोऽअस्तु दूरे नोऽअद्य यज्ञे सधस्थे

**सोऽध्वरायेन्द्रे हिरण्यपर्णो द्वारो देवोऽब्दो रथिभ्यो महद्भ्यः सꣳसदः ॥ ८४ ॥**

एते च एकारौकारा ऋक्षु यजुःषु च प्रकृत्या भवन्ति अकारे प्रत्यये। अत्र च यत्र द्वयोः पदयोः पाठः सूत्रे तत्र नियमार्थः स तेनैव पदेन परभूतेनाधस्तनपदस्य प्रकृतिभावः। एकपदे समाम्नाये त्वकारात्रे प्रकृतिभावः। हेडो यथा (२१अ० ३क०) देवस्य हेडोऽअवं यासिसीष्ठाः ऋच्ययं प्रकृतिभावः। “व्यपरे च” इत्यनेनाभिनिहिते प्राप्ते (६अ० २७क०) देवीरापोऽअपान्नपात्। द्वितीयमुदाहरणं आपो। यथा (४अ० २क०) आपोऽअस्मान्। गुवो यथा (१अ० १२क०) देवीरापोऽअग्रे गुवोऽअग्रे पुवः। अपाग्ने यथा (१अ० १७क०) अपाग्नेऽअग्निम्। धीरासो यथा (१अ० २८क०) तामु धीरासोऽअनुदिश्य। देवासो यथा (४अ० १क०) यत्र देवासोऽअजुषन्त। उरो यथा (४अ० ७क०) द्यावापृथिवीऽउरोऽअन्तरिक्ष। रक्षाणो यथा (४अ० १४क०) रक्षाणोऽअप्रयुच्छन्। मो यथा (४अ० २२क०) मोऽअहन्त्वं वीरम्। वैश्वानरो यथा (४अ० १४क०) वैश्वानरोऽअदब्धः। वृषभो यथा (४अ० ३०क०) अस्तभ्नाद्द्यां वृषभोऽअन्तरिक्षम्। वचो यथा (५अ० ८क०) उग्रं वचोऽअपावधीत्। प्राणो यथा (६अ० २०क०) प्राणोऽअङ्गेऽअङ्गे। उदानो यथा (६अ० २०क०) उदानोऽअङ्गेऽअङ्गे निधीतः। इमा मे यथा (१७अ० २क०) इमा मेऽअग्नऽइष्टकाः। वृष्णो यथा (७अ० २क०) वृष्णोऽअꣳशुभ्याम्। दशमास्यो यथा (८अ० २८क०) दशमास्योऽअस्रत्। अन्धो यथा (८अ० ५४क०) अन्धोऽअच्छेतः। आवित्तो यथा (१०अ० ८क०) आवित्तोऽअग्निः। (१०अ० २१क०) अरिष्टोऽअर्जुनः। द्विपदमेतत्।

प्रत्याश्रावो यथा ( १८अ० २४क० ) प्रत्याश्रावोऽनुरूपः । स्विष्टो यथा (२१अ० ५८क०) स्विष्टोऽग्निरग्निना । घासे यथा (२१अ० ४४क० ) घासेऽज्राणाम् । प्रणीतो यथा ( १८अ० १७क०) प्रणीतोऽग्निरग्निना । तेभ्यो नमोऽस्तु यथा (१५अ० १५क०) तेभ्यो नमोऽस्तु ते नोऽवन्तु । तेभ्यो नमो इति किम् । (१६अ० ८क०) नमोऽस्तु नीलग्रीवाय । दूरे यथा ( १७अ० ८३क०) दूरेऽअमित्रस्य गणः । नो यथा ( १७अ० ८४क० ) सम्मितासो नोऽअद्य । यज्ञे यथा ( १७अ० ८४क० ) यज्ञेऽस्मिन् । सधस्थे यथा (११अ० ६१क०) पृथिव्याः सधस्थेऽअङ्गिरस्वत् । सो यथा (२३अ० ७५क०) सोऽअध्वराय परिणीयते । इन्द्रे यथा (२१अ० ४८क०) सुदेवमिन्द्रेऽअग्निना । हिरण्यपर्णो यथा (२१अ० ५६क०) हिरण्यपर्णोऽअश्विभ्याम् । द्वारो यथा (२१अ० ४९क०) देवीर्द्वारोऽअश्विना । देवो यथा (२१अ० ५८क०) देवोऽअग्निः स्विष्टकृत् । अब्दो यथा (१२अ० ७४क०) सजूरब्दोऽअयवोभिः । रथिभ्यो यथा (१६अ० २६क०) नमो रथिभ्योऽअरथेभ्यः । महद्भ्यो यथा ( १६अ० २६क०) महद्भ्योऽअर्भकेभ्यः । सꣳसदो यथा ( २६अ० १क०) सꣳसदोऽअष्टमी ॥

## छन्दोऽअङ्कुपमङ्काङ्कमस्रीवयः ॥ ८५ ॥

छन्द इत्ययमोकारः अङ्कुपं अङ्काङ्कं अस्रीवय इत्येतेषु प्रकृत्या भवति । अङ्कुपं यथा ( १५अ० ४क० ) काव्यं छन्दोऽअङ्कुपम् । अङ्काङ्कं यथा (१५अ० ५क०) तन्द्रं छन्दोऽअङ्काङ्कम् । अस्रीवयो यथा (१४अ० १८क०) प्रतिमाच्छन्दोऽअस्रीवयश्छन्दः । एतेष्विति किम् (१५अ० ५क०) सꣳस्तुप्छन्दोऽनुष्टुप्छन्दः ॥

## का भुवोती सदना होतारा ज्या स्वधा पृथिवी प्रतिमेमसदन्नश्यामाकर्मोर्द्ध मियमवस्ता- दुतास्तिषु ॥ ८६ ॥

का भुवा ऊती सदना होतारा ज्या स्वधा पृथिवी प्रतिमा एतानि पदानि प्रकृत्या भवन्ति। ईम् असदन् अश्याम अकर्म ऊर्द्धम् इयम् अवस्तात् उत अस्ति इत्येतेषु प्रत्ययेषु यथासङ्ख्यम्। का यथा (२३अ० ५५क०) काऽईमरे। भुवा यथा (२अ० ६क०) भुवाऽअसदन्। ऊती यथा (१८अ० ७४क०) ऊ॒तीऽअ॒श्याम॑ र॒यिम्। सदना यथा (८अ० १८क०) सु॒गावो॑ देवा॒ः सद॑नाऽकर्म। होतारा यथा (२७अ० १८क०) दैव्या होताराऽऊ॒र्द्ध्वम्। ज्या यथा (२९अ० ४०क०) ज्याऽइ॒यम्। स्वधा यथा (३३अ० ७४क०) स्व॒धाऽअव॑स्तात्। पृथिवी यथा (३३अ० ४२क०) पृ॒थि॒वीऽउ॒त द्यौः। प्रतिमा यथा (३२अ० २क०) न तस्य प्रति॒माऽअ॑स्ति।

## प्रगृह्यठं० स्वरे॥ ८७ ॥

प्रगृह्यं पदं स्वरे प्रत्यये प्रकृत्या भवति। यथा (७अ० ३१क०) इन्द्राग्नी॒ऽआग॑तम्। (३३अ० ५क०) स्व॒र्थेऽअ॒न्यान्या। स्वरसन्धेरपवादः॥

## न रोदसीमे ॥ ८८ ॥

रोदसी इत्येतत्पदं प्रगृह्यं इमे इत्येतस्मिन् पदे न प्रकृत्या भवति। यथा (२७अ० २४क०) रा॒ये नु यञ्ज॒ज्ञतू॒रोद॑सी॒मे। इमे इति किम्। (१७अ० ५९क०) आ पप्रि॒वान्॒रोद॑सीऽअ॒न्त- रि॑क्षम्॥

## विश्पतीवोपस्थिते ॥ ८९ ॥

विश्पती इत्येतत् पदं इवे परभूते उपस्थिते इतिकरणे प्रकृत्या भवति। यथा (३३अ० ४०क०) विश्पती ऽइवेति विश्पती ऽइव। उपस्थित इति किम्। (३३अ० ४४क०) आ विश्पतीव बीरिटे ॥

उकारोऽपृक्तोऽस्पर्शात् ॥ ९० ॥

उकारोऽपृक्त एकवर्णः अस्पर्शात् परः प्रकृत्या भवति स्वरे प्रत्यये। यथा (२३अ० १६क०) न वाऽउ ऽएतत्। (१७अ० ९७क०) एतवाऽउ ऽअग्नौ। अपृक्त इति किम्। (३अ० ५१क०) योजान्विन्द्र। अस्पर्शादिति किम्। (२३अ० ९क०) किम्वा वपनं महत् ॥

प्लुतमितौ ॥ ९१ ॥

प्लुतान्तं पदं प्रकृत्या भवति इतौ प्रत्यये। यथा (२३अ० ४९क०) विवेशा ३ इति। तेषु विश्वभुवनमाविवेशा ३ ॥

ओकारश्च ॥ ९२ ॥

ओकारः पदान्तीयः प्रकृत्या भवति इतौ प्रत्यये। यथा (२०अ० ७८क०) चित्रभानो इति। (४अ० २७क०) कृशानो इति। इतावित्यनुवृत्तिः कस्मात् स्वरमात्रे मा भूत् इतावित्येव (४अ० २७क०) कृशानवेते वः ॥

उकारोऽपृक्तो दीर्घमनुनासिकम् ॥ ९३ ॥

उकारोऽपृक्त एकवर्णो दीर्घमनुनासिकं चापद्यते। यथा (८अ० ४०क०) ऊँ इति। इतावित्येव। यथा (२५अ० ४४क०) न वाऽउ एतत्। नात्र दीर्घमनुनासिकं च। इतावविद्यमानत्वात् ॥

एतेश्च परं पदं चर्चायाम् ॥ ९४ ॥

इतिकरणाच्च परं उ इत्येतत् पदमपृक्तं दीर्घमनुनासिकमापद्यते पदचर्चायाम्। चर्चापदस्वरूपमुक्तम् एतदुक्तं भवति वेष्टने यदितिकरणात् परं पदं चर्चा तदेवमुच्यते। तत्पदस्वरूपज्ञापनार्थम्। यत्र तु तथाभूतं पदस्वरूपं न भवति तत्र उ इत्येतत्स्वरूपं हि तत् पदं भवति। अयं चार्थोऽनेन सूत्रावयवेन ज्ञाप्यते। इतिकरणात् परतो यत्पदवचनं तत्स्वरूपज्ञापनार्थमिति। (८अ० ४०क०) उत्। ऊँ इत्यूम्। त्यम् जातवेदसमिति जात। वेदसम्। पदचर्चायामिति किम्। उइति॥

## तकारवर्गश्चकारवर्गे चकारवर्गम्॥ ९५॥

तकारवर्गः पदान्तीयः चकारवर्गे प्रत्यये परे चकारवर्गमापद्यते। यथा (३६अ० २४क०) तत् चक्षुः। तच्चक्षुः। (२०अ० ५२क०) आरात् चित्। आराच्चिद्द्वेषः। (१५अ० ५क०) आच्छत् छन्दः। आच्छच्छन्दः। (१५अ० २४क०) उत् जिहानाः। ऊर्ध्वर्यामुज्जिहानाः। झकारादि ञकारादि च पदानामुदाहरणं संहितायां न विद्यते। नकारस्य चकारछकारप्रत्यययोः सन्धिरुक्तः। "नुः"। "चछयोः शम्"। जकारे उदाहरणम्। यथा (५अ० ३६क०) वाजान् जयतु। वाजाञ्जयतु॥

## शकारे च॥ ९६॥

शकारे च प्रत्यये परे तकारवर्गश्चकारवर्गमापद्यते। यथा (१अ० ५क०) तत् शकेयम्। तच्छकेयं तन्मे। (१७अ० ४५क०) उत् शिषः। माऽमीषां कञ्चनोच्छिषः। (३३अ० ५क०) स्वधावान् शक्रः। स्वधावाञ्छुक्रः। (२४अ० ११क०) पिशङ्गान्

शिशिराय। पिशङ्गाञ्छिशिराय। (२५अ० १क०) आदित्यान् श्मश्रुभिः। आदित्याञ्छ्मश्रुभिः॥

## परश्चास्पर्शपरश्छम्॥ ९७॥

परश्च शकारः अस्पर्शपरश्छकारमापद्यते। यथा तच्छ्लोकेयम्। मा॑ऽमीषां कञ्चनोच्छिषः। स्वधावाञ्छुक्रः। पिशङ्गाञ्छिशिराय। अस्पर्शपर इति किम्। आदित्याञ्छ्मश्रुभिः॥

## उदस्तभाने लोपम्॥ ९८॥

उत् उपसर्गात्परस्तभाने प्रत्यये सकारो लोपमापद्यते। यथा (१७अ० ७२क०) उत् स्तभान। ज्योतिषा दिवमुत्तभान। (४अ० ३६क०) उत् स्तम्भनम्। उत्तम्भनम्॥

## अश्वात् स्थे तकारꣳ संज्ञायाम्॥ ९९॥

अश्वशब्दादुत्तरः सकारः तकारमापद्यते संज्ञायां स्थे प्रत्यये। अश्वः अशनव्यापारोऽग्निरस्मिँस्तिष्ठतीत्यश्वत्थो वृक्षः। यथा (१२अ० ७९क०) अश्वत्थे वो निषदनम्। संज्ञायां किम्। अश्वस्थः पुरुषः॥

## स्वरात् संयोगादिर्द्विरुच्यते सर्वत्र॥१००॥

इत उत्तरं द्विर्भावप्रकरणं वर्त्तिष्यते। स्वरात्परः संयोगादिभूतो वर्णो द्विरुच्यते सर्वत्र। अधस्तनविधानं पदान्तपदाद्योः। इदं तु सर्वत्र पदान्तपदाद्योर्मध्ये च पदान्तपदाद्योर्भवति। यथा (१३अ० ३८क०) सम्यक् स्रवन्ति। सम्यक्क्स्रवन्ति। द्वौ ककारौ सकारो रेफश्च संयोगः। तत्र पूर्वककारो द्विरुक्तिजः। (१३अ० ५७क०) अनुष्टुप्प्शारदी। द्वौ पकारौ शकारश्च संयोगः। तत्र प्रथमः पकारो द्विरुक्तिजः। पदमध्ये भवति यथा (२४अ० १क०) अश्वस्तूपरो। द्वौ शकारौ वकारश्च

संयोगः । तत्र प्रथमः शकारो द्विरुक्तिजः । स्वरादिति किम् । (३३अ० १५क०) सुधिश्श्रु॑त्कर्ण । अत्र शकाररेफौ संयोगः ॥

## परं तु रेफहकाराभ्याम् ॥ १०१ ॥

रेफहकाराभ्यां परं व्यञ्जनं द्विरुच्यते न तु रेफहकारौ । यथा (१अ० १क०) ऊर्ज्जे । रेफो द्वौ जकारौ संयोगः । तत्र प्रथमो जकारः क्रमजः । (३१अ० १२क०) सूर्य्य॑ + । रेफो द्वौ यकारौ संयोगः । तत्र पूर्वो यकारः क्रमजः । (१४अ० १क०) बाह्व्वोः । हकारो द्वौ वकारौ संयोगः । तत्र प्रथमो वकारः क्रमजः ॥

## ऊष्मान्तस्थाभ्यश्च स्पर्शः ॥ १०२ ॥

ऊष्माणः शषसहाः । अन्तस्था यरलवाः । एतेभ्यः परः स्पर्शो द्विरुच्यते । यथा (२४अ० ४क०) पृश्न्नि॑ + । एकः शकारो द्वौ नकारौ संयोगः । तत्र प्रथमो नकारः क्रमजः । (१८अ० १३क०) अश्म्मा॑ । शकारो द्वौ मकारौ संयोगः । तत्र प्रथमो मकारः क्रमजः । (२५अ० ४०क०) पार्ष्ण्य॑ग्रा । रेफः षकारो द्वौ णकारौ यकारश्च संयोगः । तत्र प्रथमो णकारः क्रमजः । (१अ० ८क०) सस्न्नि॑तमम् । सकारो द्वौ नकारौ संयोगः । तत्र प्रथमो नकारः क्रमजः । (१०अ० २क०) राष्ट्ट्रदा राष्ट्ट्र॑म् । षकारो द्वौ टकारौ रेफश्च संयोगः । तत्र प्रथमष्टकारः क्रमजः । (११अ० ११क०) हस्त्ते॑ । सकारो द्वौ तकारौ संयोगः । तत्र प्रथमस्तकारः क्रमजः । हकारस्य द्विर्भावो निषिद्धः । यकारस्य परभूतैः स्पर्शैः संयोगो न विद्यते । रेफस्य द्विर्भावो निषिद्धः । (२३अ० १३क०) शुल्म्म॑लिः । लकारो द्वौ मकारौ संयोगः । तत्र प्रथमो मकारः क्रमजः । (१०अ० ८क०) उल्-ब्ब॑म् । लकारो द्वौ बकारौ संयोगः । तत्र प्रथमो बकारः

क्रमजः। (२३अ० ३२क०) दृधि क्राव्ण +। वकारो द्वौ षकारौ संयोगः। तत्र प्रथमो षकारः क्रमजः॥

## जिह्वामूलीयोपध्मानीयाभ्यां च ॥ १०३ ॥

जिह्वामूलीयादुपध्मानीयाच्च परः स्पर्शो द्विर्भवति। जिह्वामूलीयाद्भवति यथा (३अ० २७क०) मयि व(+ क्रामधरणम्। जिह्वामूलीयो द्वौ ककारौ संयोगः। तत्र प्रथमः ककारः क्रमजः। (११अ० २२क०) तत+ खनेम। जिह्वामूलीयः ककारखकारौ संयोगः। तत्र प्रथमः ककारः क्रमजः। उपध्मानीयाद्भवति यथा (१२अ० ७५क०) याऽओषधी(+ पूर्वा जाताः)। उपध्मानीयो द्वौ पकारौ संयोगः। तत्र प्रथमः पकारः क्रमजः। (१२अ० ८९क०) या(+) प्फलिनी(:। उपध्मानीयः पकारफकारौ संयोगः। तत्र प्रथमः पकारः क्रमजः। एतौ च जिह्वामूलीयोपध्मानीयौ काण्वादिविषयौ तथाहि वक्ष्यति "तस्मिंल्ललृह्जिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम्"। इति॥

## यैस्तु परं तैर्न पूर्वम् ॥ १०४ ॥

यैस्तु संयुक्तं परं व्यञ्जनं द्विरुच्यते यैः संयोगे सति परस्य द्विर्भाव उक्तः तैः संयुक्तं न पूर्वव्यञ्जनं द्विर्भवति। ऊष्मणामन्तस्थानां च परस्य स्पर्शस्य द्विर्भाव उक्तः। तत्र यद्युभयतः संयुक्ता ऊष्माणोऽन्तस्था वा स्पर्शैर्भवन्ति। तत्र प्रथमस्य स्पर्शस्य द्विर्भावः प्राप्नोति स्वराव्यवधानात्स निषिध्यत इति सूत्रार्थः। (१९अ० ८९क०) पक्ष्माणि। (१अ० २७क०) सुक्ष्मा। (४अ० १२क०) श्रयक्ष्माः। तत्र ककारषकारमकाराः संयोगः। तत्र ककारस्य द्विर्भावः प्राप्नोति स निषिध्यते। उक्तं च। यत्र चोभयतः स्पर्शैः संयुक्ताः शषसाः सह। न तत्राद्यः क्रमो ज्ञेयो न परो बोधितो बुधैः॥

## नास्वरपूर्वा ऊष्मान्तस्थाः ॥ १०५ ॥

ऊष्मणामन्तस्थानां च परस्य स्पर्शस्य द्विर्भाव उक्तः। तदपवादोऽयं योगः। अस्वरपूर्वा ऊष्माणोऽन्तस्थाश्च परान् स्पर्शान्न द्विर्भावयन्ति। (१९अ० २७क०) स्थालीभिः स्थालीः। अत्र सकारथकारौ संयोगः। (१अ० १९क०) दिवः स्कम्भनीः। अत्र सकारककारौ संयोगः। अस्वरपूर्वा इति किम्। (२अ० ८क०) विष्णोः स्थानम्। (५अ० २१क०) विष्णोः। (१अ० १२क०) पवित्रे स्थः। (१०अ० २क०) राष्ट्रम्। अत्र द्विर्भावो भवति॥ विसर्जनीयात्परः स्पर्शो व्यञ्जनपरः सन् द्विरुच्यते। यथा (१२अ० ५क०) विष्णोः क्रमः। (२४अ० ३०क०) नीलङ्गोः क्रिमिः। विसर्जनीयो द्वौ ककारौ रेफश्च संयोगः। यथा (९अ० १क०) देव सवितः प्रसुव। (११अ० १क०) युञ्जानः प्रथमम्। विसर्जनीयो द्वौ पकारौ रेफश्च संयोगः। व्यञ्जनपर इति किम्। (२४अ० ३२क०) न्यङ्कुः कक्कटः। गौर मृगः पिद्वः। (१अ० २क०) वसोः पवित्रम्। (१२अ० ८९क०) याः फलिनीः। अत्र द्विर्भावो न भवति॥

## ङ्नौ चेद्ध्रस्वपूर्वौ स्वरे पदान्तौ ॥ १०६ ॥

ङकारनकारौ पदान्तीयौ द्विर्भवतो ह्रस्वस्वरपूर्वौ स्वरे प्रत्यये। यथा (१०अ० २४क०) युङ्ङसि। (११अ० ३२क०) तमुत्वादध्यङ्ङृषिः। द्वौ ङकारौ। (१७अ० १क०) अश्मन्नूर्जम्। (३अ० ५१क०) अक्षन्नमीमदन्त। द्वौ नकारौ। ह्रस्वपूर्वाविति किम् (२५अ० २३क०) सुप्राङ्जो मेस्यत्। (८अ० ३१क०) तानुज्जेषम्॥

## सँयोगपूर्वव्यञ्जनान्ताऽवसानगताः स्वरा द्विमात्राः ॥ १०७ ॥

संयोगात्पूर्वः संयोगपूर्वः । यथा (२३अ० १६क०) अ॒ग्नि॒ः॑ । (१०अ० ३०क०) विष्णु॑ना । व्यञ्जनमन्ते यस्य स व्यञ्जनान्तः । यथा (११अ० ३०क०) दृव्यङ् । अवसानं प्राप्तोऽवसानगतः । यथा (१अ० १क०) प्रा॒ह्णि । (१अ० ४क०) र॒च । एते स्वरा द्विमात्रा काला भवन्ति न तु दीर्घा गुरव एते भवन्ति । अत्रोच्यते । गुरवो द्विगुणकालाः । व्यञ्जनद्विरुक्तिप्रसङ्गेन स्वराणामपि गौरवमुक्तं तत्र हि द्विगुणः कालो भवति ॥

## प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः ॥ १०८ ॥

संयोगस्यादिभूतस्य वर्णस्य द्विर्भावो ह्युक्तः सोऽन्यथाऽपि क्वचिद्भवतीत्याह । प्रथमैः स्ववर्गीयैः सह द्वितीया द्विरुच्यन्ते । तृतीयैश्च स्ववर्गीयैः सह चतुर्था द्विरुच्यन्ते । यथा (११अ० २०क०) विख्याय । वि॒क्ख्याय॑ । ककारखकारौ यकारश्च संयोगः । (२३अ० ३८क०) आच्छ्य॑ति । चकारछकारौ यकारस्य संयोगः । (२८अ० ४१क०) वि॒ष्प्फु॒र॑न्ति । षकारः पकारफकारौ संयोगः । यथा (१अ० २५क०) गो॒ष्ठान॑म् । (२अ० १क०) आ॒ख॒रे॒ष्ठः॑ । षकारटकारठकाराः संयोगः । (११अ० ३४क०) प्रा॒त्थ॒ः॑ । (२३अ० १३क०) रा॒त्थ॒ः॑ । तकारथकारौ यकारश्च संयोगः । चतुर्था यथा (८अ० ४२क०) आजि॑ग्घ्र । गकारघकारौ रेफश्च संयोगः । डकारस्यापि सम्भवः । (१६अ० ५०क०) मीड्ढ्व॑ ÷ । डकारढकारौ वकारश्च संयोगः । (४अ० १८क०) अद्ध्व॑नस्पा॒तु । दकारधकारौ वकारश्च संयोगः । (३३अ० ३०क०) वि॒ब्भ्राट् । बकारभकारौ रेफश्च संयोगः ॥

## नानुस्वारः ॥ १०९ ॥

संयोगपूर्व इत्यनुवर्त्तते । संयोगपूर्वोऽनुस्वारो न द्विरु-

ष्यते। यथा (१७अ० ८७क०) द्रुमण्ँस्तनम्। (३अ० २८क०) सोमानण्ँस्वरणम्। असंयोगपूर्वस्य अनुस्वारस्योपरिष्टाद्व-क्ष्यति। "अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धमात्रा पूर्वा चार्द्धमात्रा" इति। यथा (१०अ० २४क०) हुठंसः) ॥

## सवर्णे ॥ ११० ॥

सवर्णे प्रत्यये न द्विरुक्तिर्भवति। अन्तस्थासंयोगोऽत्रोदा-हरणम्। "स्ववर्गीये चानुत्तमः" इति स्पर्शानां वक्ष्यति। यथा (१अ० २२क०) सम् यौमि। सँय्यौमि। द्वौ यकारौ संयोगः। (१अ० २१क०) सम् वपामि। सँव्वपामि। द्वौ वकारौ संयोगः॥

## ऋवर्णे ॥ १११ ॥

ऋवर्णे प्रत्यये न द्विरुक्तिर्भवति। यथा (२७अ० ४क०) अनिष्टृतः। षकारटकारौ संयोगः। "ऊष्मान्तस्थाभ्यश्च स्पर्शः" इति प्राप्तस्य प्रतिषेधः॥

## ऌवर्णे ॥ ११२ ॥

ऌवर्णे प्रत्यये न द्विरुक्तिर्भवति। यथा (१८अ० १२क०) ऋद्धिः। (१८अ० ११क०) कॢप्तम्। "विसर्जनीयाद्व्यञ्जनपरः" इति प्राप्तिः। ऌकारस्य मध्ये लकारस्यार्द्धमात्रां पश्यताऽऽचा-र्य्येण निषेधः कृतः। वक्ष्यति च "ऋऌवर्णौ रेफलकारौ सण्ँ-श्लिष्टावश्रुतितरावेकवर्णौ"॥

## यमे ॥ ११३ ॥

यमे प्रत्यये न द्विरुक्तिर्भवति। यथा (२३अ० २९क०) सक्थ्या देदिश्यते नारी। ककारः थकारयमौ नकारश्च संयोगः। तत्र "स्वरात्संयोगादिः" इति द्विरुक्तिः प्राप्ता सा यमे प्रत्यये निषिध्यते। यथा (१९अ० ४६क०) सुज्ञानमसि।

जकारजकारयमौ जकारस्य संयोगः। अत्रापि "स्वरात्संयोगादिः" इति जकारस्य द्विरुक्तिः प्राप्ता सा यमे प्रत्यये इति नास्ति विरोधः। तत्कपाप्मप्रभृतीन्युदाहरणानि ददन्ति तेषां "संयोगादिः पूर्वस्य" "यमस्य" इत्यनेन सह विरोधः प्राप्नोति ॥

## विसर्जनीयः ॥ ११४ ॥

विसर्जनीयो न द्विरुच्यते। व्यञ्जनत्वाद्विसर्जनीयस्य द्विरुक्तौ प्राप्तायां प्रतिषेधोऽयम्। यथा (३अ० १२क०) दिवः ककुत्पतिः पृथिव्याः। (१२अ० ७८क०) याः फलिनीः ॥

## स्ववर्गीये चानुत्तमे ॥ ११५ ॥

स्ववर्गीये च प्रत्ययेऽनुत्तमे पूर्वो वर्णो न द्विरुच्यते। यथा (३३अ० १७क०) तत् देवानाम्। तद्देवानामवो अद्य। द्वौ दकारौ संयोगो द्विरुक्तेर्निषिद्धत्वात्। (२५अ० ८क०) अन्तरिक्षम्पुरीतता। मकारपकारौ संयोगः। अनुत्तम इति किम्। (३३अ० ४२क०) तन्नो मित्रो वरुणः। अत्र द्विरुक्तिर्भवत्येव ॥

## अवसितं च ॥ ११६ ॥

निरर्थकं व्यञ्जनमवसानगतमवसितशब्देनोच्यते। अवसितं व्यञ्जनं न द्विरुच्यते। यथा (१८अ० ९क०) ऊर्क्। रेफककारौ संयोगः। अवसितमिति किम्। (१८अ० ९क०) ऊर्क् च मे। "परन्तु रेफहकाराभ्याम्" इति प्राप्तिः। रेफस्यात्र द्विरुक्तिर्न भवति ॥

## नान्तःपदे स्वरपञ्चमान्तस्थासु ॥ ११७ ॥

स्वरे प्रत्यये पञ्चमे च परे अन्तस्थासु च प्रत्ययभूतासु यदुच्यति तदन्तःपदे न भवति पदान्तीयस्य स विकार इत्यर्थः।

यथा (३४अ० ४१क०) पूषन्। पकारस्य प्रथमस्य स्वरे तृतीयभाव उक्तः सोऽन्तःपदे न भवति। पञ्चमे यथा (२०अ० ४५क०) अन्धा समञ्चन्। (२९अ० ४१क०) अग्नीऽइमे विष्फुरन्तोऽग्निमिन्वान्। अत्र "पञ्चमे पञ्चमम्" इति पञ्चमभाव उक्तः सोऽन्तःपदे न भवति। अन्तस्थासु यथा (१अ० १क०) इषे त्वा (१२अ० १११क०) आ प्यायस्व। प्रथमस्य तृतीयभाव उक्तः सोऽन्तःपदे न भवति। वक्ष्यमाणप्रकरणस्यास्यापवादभूतोऽयं योगः। अधिकारसूत्रमेतत्॥

## स्पर्शोऽपञ्चमः स्वरधौ तृतीयम्॥ ११८॥

अपञ्चमः स्पर्शः स्वरे प्रत्यये धिसंज्ञके च तृतीयमापद्यते। स्वरे परे भवति यथा (१७अ० ४९क०) उत् एनम्। उदेनमुत्तरान्नय। (१७अ० ८९क०) समुद्रात् ऊर्मिः। समुद्रादूर्मिः)। धौ परे यथा (३अ० ४५क०) यत् ग्रामे। यद्ग्रामे। (२९अ० ३८क०) यत् वर्मी। यद्वर्मी॥

## जिति प्रथमम्॥ ११९॥

जित्संज्ञके प्रत्यये स्पर्शोऽपञ्चमः प्रथममापद्यते। यथा (८अ० ४७क०) अनुष्टुभेऽभिगूर्त्तः)। (१८अ० ९क०) ऊर्क् च मे। (३अ० ३५क०) तत्सवितुः)। (१३अ० ५७क०) अनुष्टुप्शारदी॥

## असस्थाने मुदि द्वितीयं शौनकस्य॥१२०॥

असमानस्थाने मुत्संज्ञके प्रत्यये स्पर्शोऽपञ्चमो द्वितीयमापद्यते शौनकस्याचार्यस्य मतेन। यथा (१३अ० ३८क०) सम्यक् स्रवन्ति। सम्यख्स्रवन्ति। (१३अ० ५७क०) अनुष्टुप् शारदी। अनुष्टुफ्शारदी। असस्थान इति किम्। (३अ० ३५क०) तत्सवितुः)। केचिदत्र तृतीयम् "अवसाने च" इत्येतत्सूत्रं पठन्ति

सोऽपपाठः। यतः "प्रथमोत्तमाः पदान्तीयाः" इत्यधस्तादुक्तम्॥

## पञ्चमे पञ्चमम्॥ १२१॥

पञ्चमे स्पर्शे प्रत्यये अपञ्चमः स्पर्शः पञ्चममापद्यते। यथा (१३अ० ५८क०) वाक् मात्या। वाङ् मात्या। (३३अ० ३९क०) वट् महान्। वण्म् हान्। (३३अ० ३८क०) तत् मित्रस्य। तन्मित्रस्य॥

## ह्रस्व तस्मात् पूर्वचतुर्थम्॥ १२२॥

ह्रस्व तस्मादपञ्चमात् स्पर्शात्तृतीयभूतादुत्तरः सन्नधस्तनस्य स्पर्शस्य चतुर्थमापद्यते। यथा (१७अ० ४२क०) उत् हर्षय। उद्धर्षय। (१९अ० ६६क०) अवाट् हव्यानि। अवाड्ढव्यानि॥

## नकारपरो जातूकर्ण्यस्य॥ १२३॥

ऋकारपरो हकारः अपञ्चमस्पर्शादुत्तरो न चतुर्थमापद्यते। न च पूर्वस्तृतीयं जातूकर्ण्यस्याचार्य्यस्य मतेन। यथा। (१८अ० ५८क०) सममुस्रोत् ह्रदः। सममुस्रोद्हृदः। जातूकर्ण्यस्येति किम् (१८अ० ५८क०) सममुस्रोद्धृदो वा॥

## हि॥ १२४॥

"ह्यन्तराः कालाः" इत्यधस्तादुक्तं कालशब्दस्येहाऽवधिवचनः। अतोऽवधिपरिज्ञापनार्थमिदं सूत्रम्। अवधेः प्रयोजनं "न परकालः पूर्वकाले पुनः" इत्यधस्तादेवोक्तम्॥

## यवयोः पदान्तयोः स्वरमध्ये लोपः॥१२५॥

यकारवकारयोः पदान्तभूतयोः स्वरमध्ये वर्त्तमानयोर्लोपो भवति। अश्रवणमनुच्चारणं भवतीत्यर्थः। अधस्तात् सूत्रकारेण यो यकारवकारौ विहितौ तयोरनेन लोपः क्रियते। पदान्ती·

ययोर्यकारवकारयोरसम्भवात्। यथा (३अ० १४३क०) "आकारोपधो यकारम्"। यथा। (७अ० ३९क०) महाँयिन्द्रः। महाँ२॥ऽइन्द्रः। (११अ० ८२क०) स्वाँय् अहम्। स्वाँ२॥ऽअ-हम्। तथा "कण्ठ्यपूर्वो यकारमरिफितः"। (२४अ० ३९क०) श्वित्रय् आदित्यानाम्। श्वित्रऽआदित्यानाम्। (१२अ० ५५क०) ता य् अस्य। ताऽअस्य सूददोहसः। "सन्ध्यक्षरमयवाया-वम्"। (३अ० २७क०) इड य् एहि। इडऽएहि। (३अ० २७क०) अदित य् एहि। अदितऽएहि। (२४अ० २६क०) भूम्या य् आखून्। भूम्याऽआखून् (८अ० १क०) विष्ण व् उरुगाय। विष्णऽउरुगाय। (२३अ० २०क०) ता व् उभौ। ताऽउभौ चतुरः। लुप्तयोश्च यकारवकारयोर्यः स्वरसन्धिः प्राप्नोति सः "न परकालः" इत्यादिना निषिध्यते॥

## न वकारस्यासस्थान एकेषाम्॥ १२६॥

वकारस्य पदान्तस्य असस्थाने स्वरे प्रत्यये लोपो न भव-त्येकेषामाचार्य्याणां मतेन। यथा (५अ० १६क०) विष्णावेत दाधर्त्य। (४अ० २७क०) कृशानवेत वः। असस्थान इति किम्। (८अ० १क०) विष्णऽउरुगाय। (१०अ० १६क०) हिरण्यरूपाऽउषसः॥

## असौ च शाकटायनः॥ १२७॥

असावित्येतस्य पदस्य असस्थाने प्रत्यये वकारो न लुप्यते। शाकटायनस्य मतेन। (३८अ० २क०) असौ एहि। असा-वेहि। एके एतत्सूत्रं पठन्ति सोऽपपाठः पूर्वेणैव सिद्धत्वात्॥

## प्रऽउगमिति यकारलोपः॥ १२८॥

प्रयुगमित्येतस्मिन् पदे यकारलोपः प्रत्येतव्यः कर्त्तव्यो

वा । प्रयुज्यत इति प्रयुगम् । तत्र युजेर्यकारो लुप्यते । यथा (१५अ० ८क०) प्रऽउगमुक्थमव्यथायै । "न परकालः" इत्यनेन स्वरसन्धिर्न भवति ॥

## अनादेशेऽविकारः ॥ १२९ ॥

इत उत्तरं स्वराणामुदात्तानुदात्तस्वरितप्रचितानामेकीभावगतं विकारं विवक्षुः परिभाषां चकाराऽऽचार्य्योऽनादेशेऽविकार इति । यत्रोदात्तादीनां स्वराणां सम्भावादेशो न क्रियते तत्राविकारः प्रत्येतव्यः । यथा (३अ० १२क०) अग्निर्मूर्द्धा दिवः। ककुत् । तथा (१३अ० ५८क०) इयमुपरि ॥

## प्रागुवर्णादक्षराणामेकीभावः ॥ १३० ॥

उवर्णोपलक्षितात् सूत्रात् "उदात्ताच्चानुदात्तᳫ स्वरितम्" इत्येतस्मात्प्राग्यदित ऊर्ध्वमनुक्रमिष्यामस्तत्राक्षराणामेकीभावोऽधिकृतो वेदितव्यः । "स्वरोऽक्षरम्" इत्यधस्तादुक्तमित्यतः स्वराणामेकीभावोऽधिकृतो वेदितव्यः । अधिकारसूत्रमेतत् ॥

## स्वरितवान् स्वरितः ॥ १३१ ॥

स्वरितवानेकीभावः स्वरितो भवति । यथा (११अ० ४क०) पथ्या इव । पथ्येव सूरेः। । (२०अ० ७०क०) चम्वौ इव । चम्वीव सोमं । जात्योदाहरणे यथा (१४अ० २२क०) ब्रह्म असृज्यत ब्रह्मासृज्यत । (२४अ० ३७क०) मृत्यवे असितः । मृत्यवेऽसितः। । तैरोव्यञ्जनोदाहरणे ॥

## उदात्तवानुदात्तः ॥ १३२ ॥

उदात्तोऽस्मिन्नस्तीति उदात्तवान् । उदात्तवानेकीभाव उदात्तो भवति । स चोदात्तः पुरस्तात्पश्चाद्वा भवति । इत-

रत्रोदात्तानुदात्तस्वरितप्रचिताः । यथा (१६अ० ६१क०) उभयत्रोदात्तो भवति। ये अन्नेषु। येऽन्नेषु। (१३अ० ८क०) दूणानः अस्ता। दूणानोऽस्तोऽसि। उदात्तपूर्वोऽनुदात्तपरो भवति यथा (१अ० १क०) प्र अर्पयतु। प्रार्पयतु। (४अ० १क०) आ इदम्। एदम्। उदात्तपरोऽनुदात्तपूर्वो यथा (१अ० १८क०) त्वा आशाभ्यः। त्वाशाभ्यः। (२०अ० ७क०) मे अङ्गानि। मेऽङ्गानि सर्वतः। उदात्तपूर्वः स्वरितपरो यथा (१६अ० ४५क०) सु ऊर्व्याय। नमःऽऊर्व्याय च सूर्व्याय च। अवग्रह एतदुदाहरणम्। स्वरितपूर्व उदात्तपरो यथा (२४अ० २८क०) अद्यूत्ये अवसे। अद्यूत्येऽवसे। (१अ० ३क०) सुप्वा इति। सुप्वेति पदसंहितायामुदाहरणम्। अत्रोदात्तस्वरितसन्धौ "विप्रतिषेधऽउत्तरं बलवदलोपः" इति परिभाषासूत्रेणोदात्त एव भवति। उदात्तशास्त्रस्य परत्वात्। न तु स्वरितः। स्वरितशास्त्रस्य पूर्वत्वात्। उदात्तपरः प्रचितपूर्वो यथा (८अ० ३८क०) ओजिष्ठ ओजिष्ठः। इन्द्रौजिष्ठौः। (८अ० १३क०) वाजजितः अध्वनः। वाजिनो वाजजितोऽध्वनः। अधस्तनयोगापवादः ॥

## इवर्णमुभयतो ह्रस्वमुदात्तपूर्वमनुदात्तपरꣳ स्वरितम् ॥ १३३ ॥

इकारो वर्णो यस्याक्षरस्येति इवर्णमक्षरम्। बहुव्रीहिरयमक्षरप्रधानः। इवर्णमक्षरं स्वरितं भवति। कथंभूत उभयतो ह्रस्वम्। उभयत इवर्णो ह्रस्वस्याक्षरस्येत्युभयतो ह्रस्वस्वम्। उदात्तपूर्वो यस्याक्षरस्येत्युदात्तपूर्वमक्षरम्। अनुदात्तपरो यस्येत्यनुदात्तपरमक्षरम्। यथा (२०अ० ७०क०) स्रुचि इव। स्रुचीव घृतम्। (११अ० ६१क०) अभि इन्धताम्। अभी-

न्वताम्म्, खे। उभयतो ह्रस्वमिति किम्। (१२अ० ६क०) हि ईम्। विहीमिद्धः)। उदात्तवमिति किम्। (२९अ० ३४क०) इमेऽइतीमे। (१६अ० ३८क०) वीध्रयायेति वि। ईध्राय अधस्तनयोगापवादः ॥

## वीच्चितायेति च ॥ १३४ ॥

वीच्चितायेत्ययं च एकीभावः स्वरितो भवति। यथा (२२अ० ८क०) वीच्चितायेति वि। ईच्चिताय। उदात्तपूर्वोऽनुदात्तपर एकीभावो भवति। उभयतो ह्रस्वस्तु न भवति। अतो निपात्यते ॥

## उदात्ताच्चानुदात्तं स्वरितम् ॥ १३५ ॥

अक्षराणामेकीभावस्य पूर्वो विधिः। इदानीमक्षराणां व्यञ्जनव्यवहितानां यः स्वरसंहितायां भवति स उच्यते उदात्ताच्चाक्षरात्परं व्यञ्जनव्यवहितमनुदात्तमक्षरं स्वरित भवति। यथा (४अ० ५क०) स्वाहा। (१८अ० १क०) वाजः। (१८अ० ३५क०) पयः। (१६अ० १क०) नमः। (३अ० ४५क०) मो सु नः। मो षूणः। (३अ० ४५क०) हि स्म। हि ष्माते ॥

## निहितमुदात्तस्वरितपरम् ॥ १३६ ॥

निहन्यते स्वरितमुदात्तपरं स्वरितपरं च। (१०अ० ५क०) स्वाहा सोमाय। (१६अ० १७क०) नमः हिरण्यबाहवे। नमो हिरण्यबाहवे। (२अ० २७क०) अस्थूरि णौ गार्हपत्यानि सन्तु। (१३अ० ३९क०) भासे त्वा ज्योतिषे त्वा। (१८अ० ५०क०) स्वर्ण घर्मः)। (११अ० २क०) स्वर्ग्यायेति स्वः। ग्याय। (१अ० १०क०) प्रसवेऽश्विनोः। (१७अ० ३९क०)

अग्नुर्गोऽस्माकम्। (८अ० ५४क०) प्र॒मे॒ष्ठ्य॒भिधी॑तः। (२०अ० ७०क०) स्रु॒ची॒वेति॑ स्रु॒चि। इ॒व घृ॒तम्। (६अ० ४क०) दि॒वी॒वेति॑ दि॒वि इ॒व चक्षुः। एवमेतत्तैरोव्यञ्जनजात्याभिनिहितक्षैप्रप्रश्लिष्टाः स्वरिता उदात्ते ऽनुदात्तीभूताः प्रदर्शिताः। अथेदानीं स्वरिते यथासम्भवं प्रदर्श्यन्ते। (३अ० ५क०) भूर्भुवः॒ स्व॒ः द्यौरिव। (१८अ० ५०) स्व॒र्ण घ॒र्मः स्वाहा॒ स्व॒र्णार्कः॥

## अनवग्रहे॥ १३७॥

यदेतत् "निहितमुदात्तस्वरितपरम्" इत्यधस्तादुक्तम्। एतदेके आचार्य्या अनवग्रहे मन्यन्ते। अवग्रहे तु स्वरित एव भवति। यथा (२१अ० १०क०) तनू॒नपा॒दिति॒ तनू॑। नपा॑त्। (५अ० ५क०) तनू॒नप्त्रऽ इ॒ति॒ तनू॑। नप्त्रे॑। एतच्च परमतम्। यत औज्जिहायनकैरिदमुक्तम्। अवग्रहो यदा नीचउच्चयोर्मध्यतः क्वचित्। ताथाभाव्यो भवेत् कम्पस्तनूनप्त्रे निदर्शनमिति॥

## स्वरितस्य चोत्तरो देशः प्रणिहन्यते॥१३८॥

स्वरितस्य य उत्तरो भागः स निहन्यते। उदात्ते स्वरिते वा परभूते एकेषामाचार्य्याणां मतेन। अत्र च जात्याभिनिहितक्षैप्रप्रश्लिष्टा एवोदाहरणम्। तथाभूतं तेषां शाखिनां हि स्मरणम्। यथा (१८अ० ४६क०) स्व॒र्णघ॒र्मः। (१अ० ११क०) प्र॒सवे॒ऽश्विनो॑ः। (८अ० ५४क०) प॒र॒मे॒ष्ठ्य॒भिधी॑तः। (२०अ० ७०क०) स्रु॒ची॒वेति॑ स्रु॒चि। इ॒व। वाजसनेयिनान्तु अनुदात्त एव भवति। "निहितमुदात्तस्वरितपरम्" इत्यनेन सूत्रेणानुदात्त एवेति ज्ञेयम्॥

## स्वरितात्परमनुदात्तमुदात्तमयम्॥ १३९॥

स्वरितादक्षरात्परं अव्यवहितं यदनुदात्तमक्षरं तदुदात्तमयं

भवति। उदात्तमयं प्रचितमेकश्रुतीति पर्य्यायाः (१अ० १क०) वायवस्थ। व्यञ्जनव्यवहितं प्रायो निदर्शनं दृश्यते। यथा १२अ० ८क०) अग्नं अङ्गिरः ॥

अनेकमपि ॥ १४० ॥

स्वरितादक्षरात्परं व्यञ्जनव्यवहितं यदनुदात्तमक्षरमेकमनेकं वा तत्सर्वमनुदात्तमयं भवति। प्रचितं भवतीत्यर्थः। यथा (९अ० १८क०) वाजे वाजेऽवत वाजिनः। (२१अ० ६१क०) त्वामद्यऽऋषऽआर्षेयऽऋषीणाम् ॥

नोदात्तस्वरितोदयम् ॥ १४१ ॥

स्वरितादक्षरात्परस्यानुदात्तस्योदात्तमयत्वं विधायाधुना तदपवादति। उदात्तोदयं स्वरितोदयं च नोदात्तमयं भवति किन्त्वनुदात्तमेव भवति। उदात्तोदयं भवति यथा (३८अ० ५क०) सरस्वति तमिह धातवेऽकः। (९अ० १८क०) वाजे वाजेऽवत वाजिनो नो धनेषु। स्वरितपरं यथा (१५अ० १५क०) रथौजाश्च सेनानीग्रामण्यौ। (७अ० ३०क०) उपयामगृहीतोऽसि सहस्याय त्वा ॥

द्विवर्णमेकवर्णवद्धारणात् स्वरमध्ये समानपदे ॥ १४२ ॥

"स्वरात्संयोगादिः" इत्यादिना प्रकरणेन यस्य द्विर्भाव उक्तः तस्यैतदुच्यते। वर्णे द्विवर्णसंयोग एकवर्णवत्कर्त्तव्यः। मुखसन्धारणाविशेषात् स्वरयोर्मध्ये वर्त्तमानमेकस्मिन् पदे भवति। एतच्चाभिधानमुच्यते इत उत्तरं द्वयोर्वर्णयोरैकीभावः प्रायशो निरूप्यते। यथा (३१अ० २२क०) व्यात्तम्। (१अ० १६क०) कुक्कुटः। द्विवर्णस्वरमध्य इति किम् (२अ० ८क०) आज्यम्।

(१८अ० ४२क०) भुज्युः। अत्र जकारस्य द्विर्भवति न तु स्वरयोर्मध्ये यकारेण व्यवधानात्। समानपदग्रहणेन च संहिता लक्ष्यते। पदविच्छेदे न भवति। यथा (२१अ० १क०) इमम्। मे। इमम्मे वरुण॥

## ऐकारौकारौ च॥ १४३॥

ऐकार औकारश्च द्विवर्णौ सन्तौ एकवर्णवद्धारणादेकवर्णौ भवतः। एकप्रयत्ननिर्वर्त्यौ भवतः। यथा (१अ० ६क०) कस्मै। (१अ० ६क०) तस्मै। (२०अ० ८क०) आनन्दनन्दौ आण्डौ॥

## डढौ ळळ्हावेकेषाम्॥ १४४॥

डकारढकारौ एकेषामाचार्य्याणां मतेन यथासंख्यं ळकारळ्हकारावापद्येते। स्वरमध्ये समानपद इत्यनुवर्त्तते। यथा (८अ० ४३क०) इळे। (१३अ० २६क०) अषाळ्हा। स्वरमध्ये समानपद इति किम्। यथा (१६अ० ५०क०) वनस्पते वीड्वङ्गः। मीढ्वस्तोकाय। एतच्च परमतम्। तथाहि वक्ष्यति। तस्मिँल्ळ्हजिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानामिति॥

## द्विसकारं० शास्स्वरास्स्वेति॥ १४५॥

द्वौ सकारौ अस्मिन् पदद्वय इति द्विसकारं पदद्वयम्। कतमत्तदित्यत आह। शास्स्व। रास्स्व। यथा (२१अ० ६१क०) आ च शास्स्वा च। (४अ० १६क०) रास्स्वेयत्सोम। शासे रासेश्चैकः प्रकृतिसकारः प्रथमः स्वेति प्रत्ययस्य द्वितीयः तृतीयः क्रमजः प्राप्नोति सोऽन्यत्र निषिध्यतेऽनेन सूत्रारम्भसामर्थ्येनेति॥

ऋऌवर्णौ रेफलकारौ संश्लिष्टावश्रुतिधरावेकवर्णौ ॥ १४६ ॥

ऋकारे ऌकारे च यथासङ्ख्यं रेफलकारौ कण्ठ्याणुमात्रयोर्मध्येऽर्द्धमात्रिकौ संश्लिष्टौ एकीभूतौ अविद्यमानपृथक्श्रुतिधरौ एकश्रुतिभूतौ भवतः। तथाहि वैयाकरणाः "उरण् रपरः" इति रेफमधिकं विदधति। यथा (३अ॰ १क॰) कृत्तिवासाः। (१८अ॰ ११क॰) ऋद्धिः। (१८अ॰ ११क॰) कॢप्तिः॥

मात्राणुमात्रा वर्णापत्तीनाम् ॥ १४७ ॥

"ऋऌवर्णौ रेफलकारौ" इत्यनेन सूत्रेण ऋऌवर्णयोरेफलकारौ विद्येते। इत्येतत्प्रतिपादितमिदमिदानीं चिन्त्यते कियती मात्रा कण्ठ्यस्य कियती मात्रा रेफलकारयोस्तत्प्रसङ्गेनान्याऽपि वर्णापत्तिश्चिन्त्यते। वर्णापत्तीनां त्रयः कालाः भवन्ति मात्रार्द्धमात्राणुमात्रोपलक्षिताः एतच्च "विकारो यथासन्नम्" इत्यनेन व्यवस्थाप्यते॥

अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धमात्रा पूर्वा चार्द्धमात्रेति ॥ १४८ ॥

"नानुस्वारः" इत्यनेन सूत्रेण संयोगपरस्यानुस्वारस्यार्द्धमात्राकाल इत्यवधारितत्वादयमसंयोगपरार्थ आरम्भः। अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धमात्राकालो भवति। पूर्वश्च ह्रस्वोऽर्द्धमात्राकालो भवति। यथा (१अ॰ १क॰) माऽघश॑ꣳसोऽदृ॒ब्धुरा॑। (२७अ॰ ४०क॰) मꣳहिष्ठं मत्सुदन्धसः॥

दीर्घादर्द्धमात्रा पूर्वा चाध्यर्द्धा ॥ १४९ ॥

दीर्घात् स्वरात् परोऽनुस्वारोऽर्द्धमात्राकालो भवति। यथा (२०अ॰ १३क॰) माꣳसम्। (२३अ॰ १२क॰) त्वाꣳ हि॥

द्वियकारम् ॥ १५० ॥

द्वौ यकारौ समाहृतौ द्वियकारम्। इत उत्तरं द्वियकारमधिकृतं वेदितव्यम् ॥

आप्याय्यमानो यमो रय्यै धाय्या रूपऽ० श्रवाय्यं नृपाय्यं पौरुषेय्या हृदय्या सहरय्या निचाय्य सान्नाय्य सन्ताय्येति च ॥ १५१ ॥

एते द्वियकाराः संयोगा भवन्ति। क्रमजस्तृतीयः प्राप्नोति स निषिध्यते। यथा (८अ० ५७क०) आप्याय्यमानो यमः। (१४अ० २२क०) रय्यै त्वा पोषाय त्वा। (१९अ० २४क०) ऊर्जेति धाय्या रूपम्। (१९अ० ६४क०) तन्नो गीर्भिः श्रवाय्यम्। (२०अ० ८१क०) वृत्वी रुद्रा नृपाय्यम्। (२१अ० ४३क०) पौरुषेय्या गृभः। (१६अ० ४४क०) नमो हृदय्याय च। (१२अ० १०क०) सहरय्या निवर्त्तस्व। (११अ० १क०) अग्नेर्ज्योतिर्निचाय्य। सान्नाय्यभाजनावा अमावास्या। (३९अ० ५क०) मरुतः शरसि सन्ताय्यमाने ॥

एकः ॥ १५२ ॥

इत उत्तरमेकयकाराः संयोगा भवन्तीत्यधिकृतं वेदितव्यम्। अधिकारसूत्रमेतत् ॥

ज्योतिश्श्यावनः श्येनः श्यामऽ श्यामाकाः श्येतो ज्येष्ठो ज्योग्ज्याच्छ्यति ॥ १५३ ॥

एते संयोगा एकयकारा भवन्ति। अस्वरपूर्वार्थ आरम्भः। स्वरपूर्वास्तु "स्वरपूर्वाश्च शचजाः" इत्यनेनैव सेत्स्यन्ति। कस्वाच्छ्यतीत्येतदधिकमुदाहरणं विहितम्। प्रचुराण्येवोदाहरणानि। (११अ० ३क०) बृहज्ज्योतिः करिष्यतः। (१७अ०

३८क०) दथ्यङ्क्नः पृतनाषाट्। (१८अ० ५१क०) इन्दुर्दक्षः श्येनऽऋतावा। (१८अ० १३क०) श्यामं च मे लोहं च मे। (१८अ० १२क०) श्यामाकाश्च मे। श्वेतो मल्हविः सारस्वतः। यो ह वै ज्यैष्ठ्यं च श्रैष्ठ्यं च। (३६अ० १८क०) ज्योक्‌ सुन्दृषि जीव्यासम्। (२८अ० ४०क०) ज्याऽइयऽठं समने। (२३अ० ३८क०) कस्स्वाऽऽच्छ्यति। इति विहितान्युदाहरणानि ॥

## जुषस्व यविष्ठ्य शोचा यविष्ठ्येति च ॥१५४॥

एतौ द्वौ यविष्ठ्यशब्दसंयोगावेकयकारौ भवतः। (११अ० ७३क०) तज्जुषस्व यविष्ठ्य। (३अ० ३क०) बृहच्छोचा यविष्ठ्य। एताविति किम्। (१७अ० ७६क०) सम्यां यविष्ठ ॥

## स्येति स्यत्वं च ॥ १५५ ॥

स्य इत्ययं पदावयवो स्यत्वं च पदावयवभूतं गृह्यते। एतौ च संयोगावेकयकारौ भवतः। (२३अ० ४७क०) कस्यं। (७अ० २८क०) यस्यं। (३४अ० ५२क०) हिरण्यम्। (४अ० २५क०) अभ्यस्यो ÷ कविक्रतुम्॥

## स्वरपूर्वाश्च शचजाः समानपदे द्विरुक्ताः ॥१५६॥

स्वरपूर्वाः शकारचकारजकारा एकस्मिन् पदे वर्त्तमाना द्विरुक्ताः सन्त एकयकारा भवन्ति। यथा (१८अ० ७४क०) अश्श्याम तज्ज्वाम्म्। (३६अ० २४क०) पश्श्येम शरदः + शतम्। ( २२अ० २४क० ) प्राच्यै दिशे। (१८अ० ६२क०) आच्या जानु। (१८अ० ४२क०) भुज्ज्युः सुपर्णः। स्वरपूर्वाः समानपद इति किम्। (३६अ० ३४क०) तच्चक्षुः +। (११अ० ७३क०) तज्जुषस्व ॥

## व्यञ्जनपराश्च न ॥ १५७ ॥

व्यञ्जनपराश्च शचजाः चशब्दाद्व्यञ्जनपूर्वा वा द्विरुक्ताः सन्तो यकारा न भवन्ति। (८अ० ४०क०) मद्दृशश्शमस्य केतवं+। (११अ० ३७क०) प्रशस्त दृश्शु तम्। मर्च्चीच्छपि। कूर्च्चः। (१०अ० २१क०) वज्ज्रः+। वर्ज्जयन्ति ॥

## कश्यपस्यानार्षेये जातूकर्ण्यस्य ॥ १५८ ॥

कश्यपशब्दस्यार्षेयवर्ज्जं जातूकर्ण्यस्याचार्यस्य मतेन यकारो न भवति एतदुक्तं भवति कश्यपे वाच्ये द्विरुक्ते सत्यां यकारो न भवति। यथा (२५अ० ३७क०) अपामुद्रो मासाङ्कश्यपं+। अनार्षेय इति किम्। (३अ० ६२क०) त्र्यायुषञ्जमदग्नेः कश्यपस्य। अत्र ऋष्यभिधानं कश्यपशब्दो जमदग्न्यादिभिः सहोच्चारणात्। जातूकर्ण्यस्येति किम्। (२४अ० ३७क०) कश्श्यपो रोहित्। "स्वरपूर्वाश्च शचजाः" इत्यस्यापवादः ॥

## उच्चै रज्जुमज्जानश्च ॥ १५९ ॥

उच्चैः रज्जुः मज्जानः इत्येतानि पदानि सयकाराणि न भवन्ति। यथा (१६अ० १९क०) उच्चैर्घोषाय। वाल्वजीभीरज्जुभिर्युता भवति। रज्जुसन्दानमादाय। (३०अ० ७क०) रज्जुसर्ज्जम्। (१९अ० ८२क०) अस्थि मज्जानम्मासरैः। इदमपि "स्वरपूर्वाश्च शचजाः" इत्यस्यापवादभूतम् ॥

## मर्त्तो वुरीत मर्त्तेष्वग्निः परो मर्त्तस्ते मर्त्त इति च ॥ १६० ॥

एते मर्त्तशब्दाः सयकारा न भवन्ति। यथा (४अ० ८क०) मर्त्तो वुरीत सख्यम्। (१२अ० २४क०) मर्त्तेष्वग्निरमृतो

निधायि । (२१अ० ५क०) पुरो मर्त्त + पुरः) त्वा । (२८अ० १८क०) युदा ते मर्त्तोऽअनु । एत इति किम् । (४अ० १६क०) देवऽत्रा मर्त्येष्वा । (३१अ० १७क०) तन्मर्त्यस्य । (२१अ० १४क०) सोमो देवोऽअमर्त्यः ॥

## अन्तःपदेऽपञ्चमः पञ्चमेषु विच्छेदम् ॥१६१॥

पदमध्येऽपञ्चमः स्पर्शः पञ्चमेषु स्पर्शेषु प्रत्ययेषु विच्छेदमापद्यते । विच्छेदो यम इत्यनर्थान्तरम् । रुक्क्म इत्यत्र "स्वरात्संयोगादिः" इत्यादिना ककारस्य द्विर्भावे कृतेऽनेन सूत्रेण द्वितीयस्य ककारस्य यम इत्ययं कार्य्यक्रमः क्रियते । यथा (८अ० ४क०) यज्ञः । जकारयमौ ञकारस्य संयोगः । दद्ध्न्ना । दकारधकारयमौ नकारस्य संयोगः । अन्तःपद इति किम् । (२अ० ४५क) त्वन्नो समुज्जन् । अत्र द्विरुक्त्यभावात्तकारमकारौ संयोगः ॥

## ऊष्मभ्यः पञ्चमेषु यमापत्तिर्दोषः ॥ १६२ ॥

एवमधस्तनसूत्रेण यमापत्तिं विधायाधुना यत्र यमा नेष्यन्ते तत्र दोषमाह । ऊष्मभ्यः परेषु पञ्चमेषु "ऊष्मान्तस्थाभ्यश्च स्पर्शः" इत्यनेन सूत्रेण पञ्चमानां स्पर्शानां द्विरुक्तौ कृतायां प्रथमानां स्पर्शानां यमापत्तिः सम्भवति स चात्र दोषः ॥

## स्फोटनं च ककारवर्गे वा स्पर्शात् ॥ १६३ ॥

स्फोटनं च स्पर्शानां दोषमापद्यते ककारवर्गे परभूते । स्फोटनं नाम पिण्डीभूतस्य संयोगस्य पृथगुच्चारणं स्फोटनाख्यो दोषो वा न दोषः । यथा (१३अ० २०क०) काण्डात् काण्डात् । (७अ० २६क०) वषट् कृतम् । (१८अ० ८५क०) यकृत् क्लोमानम् ।

यथा सूत्रकारप्रस्थानं तथा स्फोटनं दोषः "स्वरात्संयोगादिः" इति द्विरुक्तिविधानं न च स्फोटने सति द्विरुक्तिः सम्भवति। तथा चोक्तं याज्ञवल्क्येन "यमान्विद्यादयस्पिण्डान् सान्तस्था-न्दारुपिण्डवत्। अन्तस्था यमवर्जन्तु ऊर्णापिण्डं विनिर्दि-शेत्"। यथाऽयस्पिण्डादीनामाश्लेषस्तथैतेषां व्यञ्जनानामिति श्लोकार्थः॥

## स्वरात् स्वरे समानपदे जोयन्नतु ऋकारे ॥१६४॥

वाशब्दो विकल्पार्थः पूर्वसूत्रादिहानुवर्त्तते। स्वरात्परो जकारो वा यकारमापद्यते। स्वरे परभूते समानपदे न तु ऋकारे परे। यथा (१३अ० ५१क०) अ॒जो ह्य॒ग्नेरजनिष्ट। स्वरादिति किम्। (१०अ० २४क०) अ॒ब्जा गो॒जाः। स्वर इति किम्। (१८अ०४२क०) भु॒ज्युः। (२अ० ८क०) आज्यम्। समानपद इति किम्। (१७अ० ३४क०) तदिन्द्रेण जयत। नत्वृकार इति किम्। (२२अ० ७क०) वि॒जृम्भमाणाय॥

## ख्यातेः खयौ कशौ गार्ग्यः सक्ख्योक्ख्य-मुक्ख्यवर्जम् ॥ १६५ ॥

ख्या प्रकथन इत्यस्य धातोः खकारयकारौ संयोगमाहुः केचित्। यथा (११अ० २०क०) वि॒ख्याय चक्षुषा। आख्या-तम्। ककारशकारौ संयोगार्थं गार्ग्य आह। विक्शाय चक्षुषा। आक्शातम्। एतानि पदानि वर्जयित्वा सक्ख्यम्। उक्ख्यम्। मुक्ख्यम्। अधस्तनयोगे जकारस्य यकारापत्ति-रुक्ता या चास्मिन् योगे ख्यातेः क्शापत्तिरुक्ता एते चरकाणां इतरेषां माध्यन्दिनानां न भवत इति॥

## त्रिपदाद्यावर्त्तमाने संक्रमः॥ १६६ ॥

"सऽंहितायाम्" इत्यत आरभ्य संहितायां लक्षणं विधायाधुना पदसंहितालक्षणं विधित्सयेदमाह। त्रिपदप्रभृत्यावर्त्तमाने ग्रन्थे सङ्क्रमो भवति। आवर्त्तमानानि पदानि अतिक्रम्यानावर्त्तमानेन पदेन सह सन्धिर्भवतीत्यर्थः। यथा वयम्। त्वाम्। पतय॒ः। र॒यी॒णाम्। स्वाहा। रुद्र। यत्। तस्मै। ते। इन्द्रो। हुविषा। वि॒धे॒म। बर्हिषद॒ः। पि॒तर॒ः। इन्द्र। आ। या॒हि॒। चि॒त्र॒भा॒नो। सु॒ताः। इमे। त्वाय॒वंः। अण्वी॒भिः। तना। पू॒तासंः। धि॒या। इ॒षि॒तः। अयं तावदुत्सर्गः॥

## द्विपदैकपदान्यप्यनुवाके॥१६७॥

द्वे पदे समाहृते द्विपदं एकं च तत्पदं च एकपदं द्विपदानि च एकपदानि च बहुवचनोपदेशात् त्रिवर्त्तमानानि सङ्क्रम्यन्ते। अतिक्रम्यन्त इत्यर्थः। त्रिरावृत्त इति हि वक्ष्यति। वाजः। च। मे। प्र॒स॒वः। प्र॒य॒तिः। एकपदे यथा (१४अ० १४क०) मा। छन्दः। प्र॒मा। प्र॒ति॒मा। अनुवाक इति किम्। (१अ० २क०) वसोः। प॒वित्र॑म्। अ॒सि॒। द्यौः। पृ॒थि॒वी। (१अ० १६क०) कु॒क्कु॒टः। अ॒सि॒। त्रिरावृत्त इति किम्। (४अ० ११क०) व्र॒तम्। कृ॒णु॒त। व्र॒तम्। कृ॒णु॒त। (७अ० २०क०) सोमः। प॒व॒ते॒। सोमः। प॒व॒ते॒। (१अ० १क०) इ॒षे। त्वा। ऊ॒र्ज्जे। त्वा॥

## अनन्तरे॥१६८॥

उभयोरपि योगयोरयं योगविशेषः। "त्रिपदाद्यावर्त्तमान" इति यदुक्तं तदनन्तरे पुनरुक्ते भवति। आनन्तर्य्यं चार्थकृतं शब्दकृतं च गृह्यते। यत्रानन्तरोऽर्थो व्यवहितो वा बुद्धौ विपरिवर्त्तते तदर्थकृतमानन्तर्य्यम्। यथा (२अ० ३क०)

गन्धर्वः। त्वा। विश्वावसुः। परि। दधातु। अरिष्टै। यजमानस्य। परिधिः। असि। अग्निः। इडः। ईडितः। इन्द्रस्य। बाहुः। असि। दक्षिणः। मित्रावरुणौ। त्वा। अनन्तरेऽर्थे एतदुदाहरणम्। व्यवहिते तु। यथा (१३अ० २३क०) मधु÷। च। माधवः। च। वासन्तिकौ। ऋतू। (१४अ० ५क०) शुक्रः। शुचि÷। ग्रैष्मौ। स्वयमातृणाद्यासु एवं स्वमहर्षिणा प्रथमादिचितिषु कृतव्योपधाने दृष्टासु कण्डिकासु अर्थकृतमानन्तर्यं द्रष्टव्यम्। शब्दकृतं तु यथा (१अ० १४।१५क०) हविःकृत्। आ। इहि। कुक्कुटः। असि "द्विपदैकपदान्यप्यनुवाके" इत्यत्रार्थानन्तर्य्यमुच्यते। यथा (१अ० ६क०) कः। त्वा। युनक्ति। सः। कस्मै। तस्मै। (११अ० २४क०) त्वम्। अग्ने। द्युभि÷। आशुशुक्षणिः। (१२अ० ६६क०) याः। ओषधीः। पूर्वा÷। जाताः। अत्र या इत्येतदोषधिविषयं पदम्। याः फलिनीरित्येतदपि ओषधिविषयं तदर्थव्यवधानान्न लुप्यते। अतो याः। फलिनीः। अफलाः इत्यत्र सन्निधानाल्लुप्यते। यद्येवं अपुष्पाः। याः। पुष्पिणीः। इत्यत्र कस्माद्या इत्येतत्पदं न लुप्यते शृणु। (१२अ० ८०क०) याः। फलिनीः। याः। अफलाः। याः। अपुष्पाः। याः। च। पुष्पिणीः। एवं चत्वारोऽत्र याःशब्दा अर्थदृष्टा भवन्ति। तत्र प्रथमस्य द्वितीयेन सम्बन्धः। तृतीयस्य चतुर्थेन सम्बन्धः। तत्र तृतीयं या इत्येतत्पदं न विद्यत इत्येतस्य ख्यापनार्थं चतुर्थं न लुप्यते या इत्येतत्पदम्। शब्दानन्तर्य्यं तु यथा (३८अ० २क०) अश्विभ्यामिन्वस्व सरस्वत्यै। इन्द्राय। स्वाहा। इन्द्रवत्। यः। ते। (३७अ० ६।७क०) दिवः। सुऽसृग्ध÷। पाहि। मधु। गर्भ÷। देवानाम्॥

## अपराङ्गे ॥ १७० ॥

अपरस्य अन्यस्याङ्गभूते पुनरुक्ते सङ्क्रमो भवति । यथा (४अ० ६क०) स्वाहा । युज्ञम् । मनसः । उरोः । अन्तरिक्षात् । द्यावापृथिवीभ्याम् । वातात् । आ । रभे । अत्र स्वाहाकारः अपराङ्गम् । अपराङ्गत्वाल्लोपः । अपराङ्ग इति किम् । (४अ० ७क०) स्वाहा । आकूत्यै । प्रयुजे । अयं च स्वाहाकारः अपराङ्गं न भवति केवलत्वात् ॥

## अस्वरविकारे ॥ १७१ ॥

न विद्यते स्वरविकारो यस्मिन् पुनरुक्ते तदस्वरविकारं पुनरुक्तं तस्मिन् पुनरुक्ते सङ्क्रमो भवति । यथा (१अ० ३१क०) तेजः । असि । शुक्रम् । अमृतम् । धाम । नाम । अस्वरविकार इति किम् । (१अ० २७क०) सुक्ष्मा । च । असि । शिवा । च । असि । स्योना । (२०अ० १०क०) देवाः । युज्ञम् । अतन्वत । भेषजम् । (३०अ० १३क०) यत् । पुरुषेण । हविषा । देवाः । युज्ञम् । अतन्वत ॥

## अलिङ्गविकारे ॥ १७२ ॥

लिङ्गविकारो न विद्यते यस्मिन् पुनरुक्ते तद्व्यतिक्रम्यते । यथा (१४अ० १९क०) अग्नेः । भागः । असि । दीक्षायाः । आधिपत्यम् । ब्रह्म । स्पृतम् । त्रिवृत् । स्तोमः । इन्द्रस्य । विष्णोः । क्षत्रम् । पञ्चदशः । अत्र स्पृतशब्दो नपुंसकविषयो नोऽतिक्रम्यते । अलिङ्गविकार इति किम् । (१४अ० २०क०) आदित्यानाम् । मरुताम् । गर्भाः । स्पृताः । देवस्य । सवितुः । बृहस्पतेः । समीचीः । दिशः । स्पृताः । एकत्र शब्दः पुरुषविषयः । एकत्र स्त्रीविषयो नो गृह्यतेऽपि

न लुप्यते। १२अ० १०३क०) सम्। ते। पर्याऽसि। सम्। ऊं। यन्तु। वाजाः। वृष्णयानि। अत्र त्रयाणां समशब्दानां मध्ये प्रथमो नपुंसकविषयो द्वितीयः पुरुषविषयोऽतो गृह्यते। तृतीयो नपुंसकविषय एव अतो लिङ्गस्याभेदादतिक्रम्यते॥

## असमाने॥ १७३॥

असमानविषये आवर्त्तमाने पुनरुक्ते संक्रमो भवति। यथा (६अ० २०क०) आयुः। यज्ञेन। कल्पताम्। प्राणः)। चक्षुः। श्रोत्रम्। पृष्ठम्। अत्र आयुरादयो यज्ञकृतेरसमानाः। असमान इति किम्। यज्ञो यज्ञेन कल्पताम्। अत्र यज्ञो यज्ञेनेति। यज्ञकृतेः समानोऽतो गृह्यते॥

## त्रिरावृत्ते॥ १७४॥

त्रिरावृत्ते पुनरुक्ते संक्रमो भवति। "द्विपदैकपदान्यप्यनुवाके" इत्यस्यायं शेषः। यथा (१४अ० १७क०) इषे। ऊर्जे। रय्यै। पोषाय। अग्नेः। त्रिवृत्। त्रिरावृत्त इति किम्। (१अ० १क०) इषे। त्वा। ऊर्ज्जे। त्वा। वायवः॥

## गूढे॥ १७५॥

गूढेऽपि त्रिरावृत्ते सङ्क्रमो भवति। गूढं नाम यत्र तृतीयपदस्यावृत्तिरनुषङ्गापेक्षितत्वात्पदस्याधस्तनपदानुषङ्गेण भवति। यथा (८अ० २२क०) इयम्। ते। राट्। यन्ता। असि। यमनः। ध्रुवः। धरुणः। अत्रासिशब्दो यन्ता ध्रुव इत्यनयोः पदयोः सम्बन्धः पठ्यते। यमनधरुणपदयोस्तु अनुषज्यते। अनुषङ्गापेक्षिणौ हि तौ। अतः स एवं गूढस्त्रिरावर्त्तमानः श्रुत्या द्विरावृत्तौ व्यतिक्रम्यते। गूढ इति किम्। १अ० १क०) इषे। त्वा। ऊर्जे। त्वा॥

## पदसमूहे ॥ १७६ ॥

पदसमूहः पदसङ्घातः। यत्रैकादि पदं बहु कृत्वा आवर्त्तते स पदसमूहोऽत्राभिप्रेतः। "त्रिपदाद्यावर्त्तमानः" इत्यनेनैवेतरस्य गतार्थत्वात्। यथा (१६अ० १७क०) शतरुद्रियाध्याये। नमो हिरण्यबाहवे सेनान्ये। (१८अ० १क०) वाजः। च। मे। प्रसवः। प्रयतिः। ननु स्वरिति स्वः। च। मे। युज्ञेन। कल्पताम्। इत्यत्र कस्मान्न लोपो भवति। शृणु। अविकारार्थं च पुनरुक्तस्य ग्रहणमित्युपरिष्टाद्वक्ष्यति। तेन सूत्रेणेह पुनरुक्तं गृह्यते। एवमर्थविशेषात् पुनरुक्तस्य ग्रहणं भवति। अर्थसामान्यात् पुनरुक्तस्यातिक्रमः। तथा चोक्तम्। द्रव्यदेवतार्थलिङ्गवचनस्वरकर्तृभेदैः पुनरुक्तस्य ग्रहणं भवति। आह च। पुनरुक्तानि लुप्यन्ते पदानीत्याह शाकलः। अलोप इति गार्ग्यस्य काण्वस्यार्थवशादिति॥

## सꣳहितायाम् ॥ १७७ ॥

आर्ष्यां च संहितायां पुनरुक्ते आवर्त्तमाने सङ्क्रमो भवति। यथा (१२अ० ५४क०) लोकन्ताऽइन्द्रम्। (२२।३।२४ अ० १०।११।१२।१३क०) हिरण्यगर्भऽइत्येषः (१२अ० १०२क० मा मा हिꣳसीदित्येषा (८अ० ३६।३७क०) यस्मान्न जातऽइत्येषः)। एवं च कृत्वा ब्रह्मयज्ञसंहितायां गलिता ऋचोऽध्येतव्याः। ब्रह्मयज्ञसंहितायाः परिपूर्णतायै इति बोध्यम्॥

## अवसानार्थं पुनर्ग्रहणम् ॥ १७८ ॥

एवमधस्तादर्थनिबन्धनं पुनरुक्तस्य ग्रहणं चोक्त्वायेदानीं संहितार्थमाह। संहिताऽवसानार्थं च न पुनरुक्तस्य ग्रहणं भवति। यथा आकूत्यै। प्रयुजे। अग्नये। स्वाहा।

मेधायै॑। मन॑से। दी॒क्षायै॑। तप॑से। सर॑स्वत्यै॑। पू॒ष्णे॑। अ॒ग्नये॑। स्वाहा॑। अग्नये स्वाहेत्येतदत्र पुनरुक्तमवसानार्थं गृह्यते। बृह॒स्पत॑ये। ह॒विषा॑। वि॒धेम॒। स्वाहा॑। नात्रावसानादन्यत्प्रयोजनमस्तीति॥

## अविकारार्थं च॥ १७९॥

पदाविकारज्ञापनार्थं च पुनरुक्तं गृह्यते। यथा (२२अ॰ २७क॰) इ॒षायै॑। ऊ॒र्जायै॑। स्व॒रि॒ति॒ स्वः᳖। स्वाहा॑। मदु॒र्घ्नै व्य॑श्नु॒विने॑। अत्र स्वरित्येतस्य पदस्य परतो यत् स्वाहाकारस्य ग्रहणं तदविकारार्थम्। यदिह स्वाहाकारो लुप्यते। तदा क्रमसंहितायामप्यस्य पदस्य विकारः स्यात्। स्वर्मू॒र्द्ध्ने। मू॒र्द्ध्ने व्य॑श्नु॒विने॑। तथा च सति दृष्टरेफत्वादस्य पदस्य क्रमसंहितायां वेष्टको न स्यात्। अतः पदक्रमसंहिताया विकारार्थं स्वाहेत्यस्य पदस्य ग्रहणम्॥

## उत्सर्गश्च॥ १८०॥

उत्सर्गः परित्यागः। परित्यागश्चाधस्तनसूत्रविहितस्य लक्षणस्य भवति केषाञ्चिदाचार्य्याणां मतेन। यथा स्वर्मू॒र्द्ध्ने। मू॒र्द्ध्ने व्य॑श्नु॒विने॑। एवं च कृत्वा विकल्पेनैतल्लक्षणम्॥

## क्रमः स्मृतिप्रयोजनः॥ १८१॥

क्रम इत्ययमधिकार आऽध्यायपरिसमाप्तेः। संहिताध्ययने प्रयोजनं प्रसिद्धम्। यत्र स्वाध्याये च संहितायाः सम्बन्धात् पदाध्ययने संहितार्थपरिज्ञानं प्रयोजनमिति गम्यते। उक्तं च भाष्यकारेण "पदानि स्वं स्वमर्थं क्रमयन्तीति"। पदानि स्वं स्वमर्थमभिधाय चित्तवृत्तिव्यापाराण्यर्थमवगमयन्ति। अथेदानीं पदार्था अवगताः वाक्यार्थमवगमयन्तीति पदपूर्वकं

पदार्थपरिज्ञानं पदार्थपरिज्ञानपूर्वकवाक्यार्थपरिज्ञानं दर्शयति। एवं संहितापाठे पदपाठे च प्रसिद्धं प्रयोजनम्। न तथा क्रमपाठ इत्यत आह। स्मृतिः प्रयोजन इति। स्मृतिः प्रयोजनमस्येति स्मृतिप्रयोजनः। संहिताविषयं दृढस्मरणं करोति पदविषयं च। प्रयोजनदिगियं सूत्रकृता प्रदर्शिता। प्रयोजनानि तु अन्यान्यानि बहूनि यथा द्वयोर्द्वयोः पदयोर्वर्णसंहितोदात्तादिस्वरसंहिता च क्रमं मुक्त्वा नान्येन ज्ञायते। संहितावसानं च। उत्तमं चैतत्। पदकारणं क्रमः, क्रमणं क्रमः, सम्मानं च शिष्टानां मध्ये क्रमं करोति। व्याकरणस्मृतिश्च क्रमाध्यायिनि प्रत्ययं विदधाति। तदधीते तद्वेद इत्युपक्रम्य "क्रमादिभ्यो वुन्निति" अत्र क्रममधीते क्रमकः। पदमधीते पदकः। सिद्धक्रमस्याध्ययनं दर्शयति। अतो हि क्रमो बहुप्रयोजनवान् ॥

## द्वे द्वे पदे सन्दधात्युत्तरेणोत्तरमाऽवसानादपृक्तवर्जम् ॥ १८२ ॥

द्वे द्वे पदे सन्दधाति कथं सन्दधाति उत्तरेणोत्तरं पदं सन्दधाति। ततस्तेनान्यदुत्तरमित्रमवसानं यावत् अपृक्तं वर्जयित्वा। अपृक्तं वक्ष्यति। यथा ( ३अ० ४क० ) उपत्वा। त्वाऽग्ने। अग्ने हविष्मतीः। हविष्मतीर्घृताचीः। घृताचीर्यन्तु। यन्तुहर्यत। हर्यतेति हर्यत। अपृक्तमिति किम्। (२४अ० २२क०) सोमाय हंसान्। हंसानालभते। आलभते। (१अ० १क०) कर्मणऽआप्यायध्वम्। आप्यायध्वम्। प्यायध्वमघ्न्याः। (१२अ० २७क०) उदुत्वा। ऊँऽइत्यूँ। त्वा। विश्वे। (७अ० ४१क०) उदुत्यम्। ऊँऽइत्यूँ। त्यम्।

ज्ञातवे दसम्। (११अ० ३०क०) तमुत्वा। ऊँऽइत्यूँ। त्वा। दृद्यङ्।

## अप्टक्तमध्यानि त्रीणि स त्रिक्रमः ॥१८३॥

अपृक्त आकार उकारश्च अपृक्त एषां मध्य इत्यपृक्तमध्यानि तद्गुणसंविज्ञानो बहुव्रीहिः। लम्बकर्णवत्। त्रीणि मध्यानि स त्रिक्रमो भवति। यथा (२४अ० २२क०) सोमाय हुंठं०सान्। हुंठं०सानालभते। आलभते। (१अ० १क०) कर्मणेऽआप्यायध्वम्। आप्यायध्वम्। (११अ० २७क०) उदुत्वा। ऊँऽइत्यूँ। त्वा विश्वे। (११अ० २८क०) तमु त्वा। ऊँ इत्यूँ। त्वा दृध्यङ्॥

## पुनराकारेणोत्तरम् ॥ १८४ ॥

आकार उकारश्चापृक्तौ तयोरुकारस्य प्रगृह्यत्वादुपरिष्टाद्विष्टकं वक्ष्यति। आकारस्य यद्वक्तव्यं तदाह त्रिक्रमं कृत्वा पुनराकारेणोत्तरं पदं सन्दधाति। यथा सोमाय हुंठं०सान्। हुंठं०सानालभते। आलभते। कर्मणऽआप्यायध्वम्। आप्यायध्वम्॥

## मोषूणाभीषुणौ च ॥ १८५ ॥

एतौ त्रिक्रमो भवतः। यथा (३अ० ४५क०) मोषूण÷। मोऽइति मो। सु नं÷। नऽइन्द्र। (२७अ० ४०क०) अभीषुणं÷। सुनं÷। नः सखीनाम्॥

## चत्वार्य्यप्टक्तपूर्वे नकारपरे सौ ॥१८६॥

चत्वारि पदानि सन्दधाति स्वित्येतस्मिन् पदेऽपृक्तपूर्वे नकारपरे च। यथा (११अ० ३८क०) ऊर्ध्वऽऊषुणं÷। ऊँऽइत्यूँ। सु नं÷। नऽऊतये। (१७अ० ७७क०) एनाहृत्वा०सऽऊषुणं÷। ऊँऽइत्यूँ। सु नं÷। नुः सुहृत्वासः। (२०अ०

७२क०) गोमदूषुर्णासत्या। गोमदिति गो। मत्। ऊ ँ ऽइत्यू ँ। सुनासत्या। नासत्याश्वावत्॥

## मकारपरे चैके॥ १८७॥

सु इत्येतस्मिन् पदे अप्टक्तपूर्वे मकारपरे च एके आचार्य्याश्चत्वारि पदानि सन्दधति। यथा (२१अ० ४क०) महीमूषु मातरम्। ऊ ँ ऽइत्यू ँ। सु मातरम्। मातरꣳ सुव्रतानाम्। मकारपर इति जघन्यश्चायमेकीयः पक्षः। यतश्चतुःक्रमेषु सर्वेषु पूर्वो भावी उत्तरं सुपदं ततो नकारादिपदम्। यथा गोमत्। ऊ। सु। नासत्येति। तत्र उकारो भावी सुपदस्य षत्वे निमित्तम्। सुपदे षत्वं नकारादौ पदे णत्वे निमित्तम्। तत्र यदि चतुःक्रमो न स्यात्तर्हि णत्वं विहन्येत। ततस्तु आर्षी संहिता न स्यात्। चतुःक्रमे तु सा स्मृता भवति। न च कश्चिदिह सुशब्दं विना मकारादेः पदस्य विकारः सम्भवति। अतस्त्रिक्रम एवायम्। महीमषु। ऊ ँ ऽइत्यू ँ। सु मातरम्। एवं त्रिक्रमेष्वपि प्रयोजनान्यन्वेष्टव्यानि॥

## पुनः सुपदेनोत्तरम्॥ १८८॥

यत्र सुपदनिमित्तस्त्रिक्रमश्चतुःक्रमो वा कृतस्तत्र पुनः सुपदेनोत्तरं पदं सन्दधाति। यथा (३अ० ४५क०) मो षूणः। मोऽइति मो। सुनः। (२७अ० ४०क०) अभीषुणः। नः सखीनाम्। (२०अ० ७२क०) गोमदूषुर्णासत्या। गोमदिति गो। मत्। ऊ ँ ऽइत्यू ँ। सु नासत्या॥

## पूर्वस्योत्तरसꣳहितस्य स्थितोपस्थितमवग्रह्यस्य॥ १८९॥

एवं द्वित्रिक्रमाद्यनन्तरं परिशिष्टं क्रमविधिमाह। पूर्व-

स्योत्तरपदस्य त्रिपदचतुःक्रमसम्बन्धस्य सतः पश्चात् स्थितोपस्थितं कर्त्तव्यम्। स्थितोपस्थितशब्देन वेष्टकोऽभिधीयते। यथा (१अ० १क) श्रेष्ठतमाय कर्मणे। श्रेष्ठतमायेति श्रेष्ठ। तमाय। (३अ० ११क०) उपप्रयन्तोऽअध्वरम्। उपप्रयन्त ऽइत्युप। प्रयन्त इति। एतच्च पदप्रदर्शनार्थं क्रियते॥

## सुपदे शाकटायनः॥ १९०॥

सुपदे स्थितोपस्थितं शाकटायन आचार्यो मन्यते। पूर्वस्योत्तरसंहितस्येति वर्त्तते। यथा (३अ० ४५क०) मो षूण इति। मोऽइति मो। स्विति सु। (१०अ० ७२क०) गोमदूषुणासत्या। गोमदिति गो। मत्। ऊँऽइत्यूँ। स्विति सु। एतच्च पदस्वरूपज्ञापनार्थं विनापि वेष्टकेन पदस्वरूपं ज्ञायते इति शाकटायनमतं न साधीयः॥

## अन्तःपददीर्घीभावे॥ १९१॥

पूर्वस्योत्तरसंहितस्य स्थितोपस्थितमिति वर्त्तते। पदमध्ये दीर्घीभावोऽन्तःपददीर्घीभावस्तस्मिन्नन्तःपददीर्घीभावे पूर्वस्योत्तरसंहितस्य स्थितोपस्थितं कर्त्तव्यम्। यथा (३३अ० ३८क०) मामहन्तामदितिः। ममहन्तामिति ममहन्ताम्। (३४अ० २१क०) सादन्यं विदथ्यम्। सदन्यमिति सदन्यम्॥

## विनामे॥ १९२॥

पूर्वस्योत्तरसंहितस्य स्थितोपस्थितमिति वर्त्तते। विनामशब्देन दन्त्यस्य मूर्द्धन्यभाव उच्यते। विनामस्यैव इत्थंभूतो गृह्यते। यत्र निमित्तनैमित्तिकावेकपदस्थौ भवतः पूर्वपदस्य विनामि उत्तरपदसंहितस्य स्थितोपस्थितं कर्त्तव्यम्। यथा (२६अ० १७क०) सिषासन्तो वनामहे। सिसासन्त-

ऽइति सिसासन्त(ः । (१८अ० २क०) सुषाव सोमम् । सुषावेति सुषाव ॥

## प्रगृह्ये ॥ १६३॥

"प्रगृह्यम्" इत्यधिकृत्य यद्विहितं तस्यायं विधिः । पूर्वस्योत्तरसंहितस्य स्थितोपस्थितमिति वर्त्तते। पूर्वं प्रगृह्ये उत्तरपदसंहिते स्थितोपस्थितं कर्त्तव्यम्। यथा (३३अ० ८३क०) इन्द्राग्नीऽअपात् । इन्द्राग्नीऽइतीन्द्राग्नी । (१२अ० २७क०) उदुत्त्वा। ऊँऽइत्यूँ । त्वा विश्वे (१३अ० ७क०) अमी रोचने। अमीऽइत्यमी। रोचने दिवः) ॥

## रिफिते निरुक्ते ॥ १६४ ॥

"विसर्जनीयो रिफितः" इत्यस्मिन्नधिकारे यानि रिफितानि पदानि विहितानि तेषामत्र ग्रहणम्। "पूर्वस्योत्तरसंहितस्य स्थितोपस्थितम्" इति वर्त्तते। सप्तमीकृतविभक्तिव्यत्ययम्। पूर्वं रिफिते पदे निरुक्ते संहितायामनिर्ज्ञातरेफे उत्तरपदसंहिते स्थितोपस्थितं कर्त्तव्यम्। यथा (७अ० ५क०) अन्तस्ते । अन्तरित्यन्तः) । ते द्यावापृथिवी। (२६अ० २०क०) नेष्टः पिब। नेष्टरिति नेष्टः । पिबऽऋतुना। सर्वे एते वेष्टकाः पदप्रकृतिज्ञापनार्थाः ॥

## अवसाने च ॥ १६५ ॥

"विरामोऽवसानम्" इत्युच्यते। अवसाने विरामे स्थितोपस्थितं कर्त्तव्यम्। संहितावसानज्ञापनार्थम्। (३अ० २क०) अग्नये जातवेदसे। जातवेदसऽइति जात। वेदसे॥

## यथासमाम्नातं क्रमावसानं सङ्क्रमेषु ॥ १६६ ॥

अवसाने सन्धिः सङ्क्रम इत्युच्यते। गलत्पदमतिक्रम्याऽगलता सह सन्धानं सङ्क्रमः। क्रमसन्धिविषयभूतेषु येन प्रकारेण क्रमावसानं परिपठितं तेनैव भवति। यथा (१अ० २।३क०) ध्रियधाऽ(÷ परमेणाऽ। च्च॒ष्टीक्त॒तधारम्। अधस्तनसूत्रापवादः॥

## दृङ्ं दृढिः॥ १८७॥

इत्युक्तार्थम्॥

## इति कात्यायनकृते प्रातिशाख्यसूत्रे चतुर्थोऽध्यायः॥

इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते मातृमोदाख्ये प्रातिशाख्यभाष्ये चतुर्थोऽध्यायः समाप्तः॥

---

## पञ्चमोऽध्यायः॥

## समासेऽवग्रहो ह्रस्वसमकालः॥ १॥

संहितापदलक्षणं वक्तव्यमिति शास्त्रमारब्धं कात्यायनेनाचार्य्येण तत्र संहितायामित्यधिकृत्य "पदान्तपदाद्योः सन्धिः" इत्यादिना ग्रन्थेन संहितालक्षणमशेषमुक्तं तथा "क्रमः स्मृतिप्रयोजनः" इत्यादिना ग्रन्थेन क्रमलक्षणमुक्तम्। तथा "अर्थः पदम्" इति पदलक्षणमुक्तम्। स्वरश्च "स्वरितवर्जमेकोदात्तं पदम्" इत्यनेनाध्यायेन विहितः। अर्थविशेषाच्चतुःप्रकारं तत् पदं भवतीत्युपरिष्टाद्वक्ष्यति। "क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्। सत्त्वाभिधायकं नाम निपातः पादपूरणः" इति तत्राख्यातं भवति। यथा पाहि। रक्ष। यज। यच्छेति। उप-

सर्गा भवन्ति यथा। "परोपापावप्रतिपरी"त्यादयः। निपाता भवन्ति। यथा। "वा च कमुचितसमस्मात्" इत्यादयः। नाम त्रिप्रकारं भवति। कृत्तद्धितसमाससंज्ञाभेदेन भिन्नम्। कृतः। यज्ञः। वेदः। याञ्चा। भूतिः। तद्धिताः। आग्नेयः। अग्नीषोमीयः। ऐन्द्राग्नः। वैश्वदेवः। समासा भवन्ति यथा विश्वकर्मा विमनाः। विहायाः। सुदक्ष। तत्र समासपदेऽवग्रहो भवति द्वयोः पदयोर्बहूनां वा परस्पराकाङ्क्षया सम्बद्धानां यत्र द्वित्र्यादिपदसमूहोच्चारणं स समासः। स च समासश्चतुःप्रकारो भवति। यथा अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहयः। तत्र पूर्वपदप्रधानोऽव्ययीभावः। यथा समभूमि। विषुरूपम्। अन्तःपदम्। अनुरूपम्। उत्तरप्रधानस्तत्पुरुषः। यथा अघशंसः। व्रतपते। आखरेष्ठः। उपप्रयन्तः। उभयपदप्रधानो द्वन्द्वः। यथा अग्नीषोमौ। इन्द्राग्नी। मित्रावरुणौ। दीक्षातपसोः। अन्यपदप्रधानो बहुव्रीहिः। यथा अनमीवाः। कृष्णग्रीवाः। शितिकक्षः। एवमेतस्मिंश्चतुःप्रकारेऽपि समासपदेऽवग्रहो भवति। द्वयोः पदयोः पृथग्ग्रहणमवग्रहः। नाना ग्रह इत्यर्थः। स च ह्रस्वसमकालो ह्रस्वाक्षरतुल्यकालो भवति। यथा (४अ० १क०) ऋक्सामाभ्यामित्यृक्। सामाभ्याम्। सन्तरन्तऽइति सम्। तरन्तः। अधिकारसूत्रमेतत् ॥

## तरतमयोश्चातिशयेऽदक्षिणप्रत्यासत्तौ ॥२॥

तरतमयोश्च प्रत्यययोः परभूतयोरतिशयवाचिनोरवग्रहो भवति। न चेद्दक्षिणशब्दस्तत्र प्रत्यासन्नो भवति। यथा (१८अ० १०क०) पूर्णतरमिति पूर्णं। तरम्। (१अ० ८क०) वह्नितममिति वह्नि। तमम्। सस्नितममिति सस्नि। तमम्।

अतिशय इति किम्। (१९अ० ८०क०) कारोतरेण दधतः। (१९अ० ८क०) यदा पिपेष मातरम्। अदक्षिणप्रत्यासङ्ग इति किम्। (२५अ० ५क०) द्यावापृथिव्योर्दक्षिणं पार्श्वं विश्वेषां देवानामुत्तरम्। असमासार्थ आरम्भः॥

## वीतमह्रुतमसूतमगोपातमरत्नधातमवसुधातमाः पूर्वेण॥ ३॥

एतानि पदानि तमपः पूर्वेण पदेनावगृह्यन्ते। वीतम यथा (११अ० ३४क०) देववीतमऽइति देव। वीतमः। (१अ० ८क०) देवह्रुतममिति देव। ह्रुतमम्। (६अ० २८क०) इन्द्राय। सुषूतमम्। सुसूतममिति सु। सूतमम्। (८अ० २९क०) सः)। सुगोपातमऽइति सु। गोपातमः। (२६अ० २०क०) रत्नधातममिति रत्न। धातमम्। (२७अ० १४क०) वसुधातमऽइति वसु। धातमः॥

## सर्पदेवजनेभ्यश्च॥ ४॥

सर्पदेवजनेभ्य इत्येतच्च पदं पूर्वेण पदेनावगृह्यते। यथा (३०अ० ६क०) सर्पदेवजनेभ्यऽइति सर्प। देवजनेभ्यः। उपरिष्टाद्वक्ष्यति "बहुप्रकृतावागन्तुना पर्वणा" इत्यस्यापवादः॥

## तूणवध्ममुत्तरेण॥ ५॥

तूणवध्ममित्येतत्पदं उत्तरेण पदेनावगृह्यते। यथा (३०अ० १८क०) क्रोशाय। तूणवध्ममिति तूणव। ध्मम्॥

## रायस्पोषदे विजावेति च॥ ६॥

रायस्पोषदे विजावा इत्येते च पदे चशब्दादुत्तरेण पदेनावगृह्येते। यथा (५अ० १क०) रायस्पोषदऽइति रायस्पोष।

दे। (१२अ० ४४क०) स्थात्। नुः। सूनुः। तनयः। विजा-
वेति वि। जावा ॥

## बहुप्रकृतावागन्तुना पर्वणा ॥ ७ ॥

बहूनि पदानि यत्र तद्बहुप्रकृतिपदं तत्र आगन्तुना पर्वणा समासलक्षणेन यत्पश्चात्कालिकं पदं भवति तेनावग्रहो भवति। यथा (३१अ० १९क०) प्रजापतिरिति प्रजा। पतिः। (१३अ० १९क०) प्रजापतिगृहीतयेति प्रजापति। गृहीतया। समासलक्षणेन यदाऽऽगन्तुकं पदं तदिह गृह्यते न तु पाठेन तेनैतद्भवति। यथा (३अ० ३७क०) सुप्रजाऽइति सु। प्रजाः। (२९अ० ५क०) सुप्रायणाऽइति सु। प्रायणाः ॥

## तद्वति तद्धिते न्यायसꣳहितं चेत् ॥ ८ ॥

तद्वतीत्यत्र एकस्य वतिशब्दस्य तन्त्रेणोच्चारणं द्रष्टव्यम्। तद्वति मत्वर्थीये तद्धिते वतौ च परभूतेऽवग्रहो भवति न्यायसंहितं व्याकरणशास्त्रोक्तसन्धिमत् पदं चेद्भवति। यथा (१३अ० २६क०) मधुमदिति मधु। मत्। (८अ० ५७क०) हिरण्यवदिति हिरण्य। वत्। वतौ खल्वपि यथा (११अ० १०क०) वरिष्ठाम्। अनु। मँवतमिति मम्। वतम्। तद्वतीति किम्। (३१अ० ३क०) एतावान्। अस्य। महिमा। न्यायसंहितमिति किम्। (६अ० २८क०) ऊर्जस्वन्तम्। (६अ० २८क०) पयस्वन्तम्। (७अ० ३६क०) मरुत्वन्तम् ॥

## शस्त्वत्रातातिषु च ॥ ९ ॥

शस्। त्वम्। त्रा। ताति। एतेषु तद्धितेषु अवग्रहो भवति। शस् यथा (२३अ० ५०क०) कति। होतारः। ऋतशऽइत्यृतु। शः। त्वम् यथा (२१अ० १७क०) मर्त्यस्य। देवत्वमिति देव। त्वम्। त्रा यथा (६अ० १८क०) देवत्रेति देव।

वा। यन्तम्। ताति यथा (७अ० ११क०) ज्येष्ठतातिमिति ज्येष्ठ। तातिम्॥ बर्हिषदम्॥

## धात्वर्थे यकारे स्वरपूर्वं॥ १०॥

प्रातिपदिकं सुब्धातुर्भवतीति कृत्वा यकार उपादीयते स धात्वर्थो यकारः "सुप आत्मनः क्यच्" इत्यादिभिः सूत्रैर्यो विहितः स इह गृह्यते। तस्मिन् धात्वर्थे यकारे प्रत्यये स्वरपूर्वेऽवग्रहो भवति। यथा (२०अ० ३८क०) वृषायमाणः। वृषयमाणऽइति वृष। यमाणः। (३अ० २६क०) अघायतः। अघयतऽइत्यघ। यतः। धात्वर्थ इति किम्। (२८अ० १२क०) यदक्रन्दः प्रथमं जायमानः। स्वरपूर्व इति किम्। (२१अ० ५२क०) इन्द्राय पच्यते मधु। वाच्यति। रूपोदाहरणम्॥

## वाꣳसौ च भूतकाले स्वरेण कृत्स्वादनुषि॥ ११॥

वांसौ च प्रत्यये परभूतेऽवग्रहो भवति। भूतकालार्थाभिधायिनि स्वरेण कृत्स्वात् स्वरान्तस्वात्परभूते स्वरेण वा कृत्स्नेनोपहिते। एवं तृतीया पञ्चम्यर्थे इति विभक्तिव्यत्ययेन योजना। अनुषि वाꣳसौ उषिपरभूतेऽवग्रहो न भवति। यथा (८अ० १९क०) यज्ञिवाꣳसऽइति यज्ञि। वाꣳसः। (८अ० १९क०) पपिवाꣳसऽइति पपि। वाꣳसः। (८अ० १८क०) सस्वाꣳसऽइति सस्व। वाꣳसः। भूतकाल इति किम्। (१७अ० ६३क०) सुविद्वाꣳसऽइति सु। विद्वाꣳसः। स्वरेण कृत्स्वादिति किम्। जिगीवाꣳसः। स्वरादिति किम्। (११अ० ३२क०) चिकित्वान्तमादयं। अनुषीति किम्। (७अ० ४४क०) सूर्य्यः। आत्मा। जगतः। तस्थुषः॥

## प्रत्नपूर्वविश्वेमर्त्तुभ्यस्था॥ १२॥

एभ्यः परस्थाप्रत्ययोऽवगृह्यते। प्रत्न यथा (७अ० ११क०) प्रत्नथेति प्रत्न। था। (७अ० ११क०) पूर्वथेति पूर्व। था। (७अ० ११क०) विश्वथेति विश्व। था। (७अ० ११क०) इमथेतीम। था। (२अ० ५८क०) ऋतुथेत्यृतु। था। इन्द्रः। वनस्पतिः। शशमानः। परिस्रुतेति परि। स्रुता॥

## ह्रस्वव्यञ्जनाभ्यां भकारादौ विभक्तिप्रत्यये॥ १३॥

ह्रस्वात् स्वराद्व्यञ्जनाच्च परभूते भकारादिविभक्तिप्रत्ययेऽवग्रहो भवति। ह्रस्वाद्भवति यथा (१६अ० २७क०) तक्षभ्यऽइति तक्ष। भ्यः। (१६अ० २७क०) अग्निभिरित्यग्नि। भिः। व्यञ्जनाद्भवति यथा (१६अ० २३क०) तिष्ठद्भ्यऽइति तिष्ठत्। भ्यः। (१६अ० २३क०) धावद्भ्यऽइति धावत्। भ्यः। ह्रस्वव्यञ्जनाभ्यामिति किम्। (१६अ० २७क०) रथकारेभ्यऽइति रथ। कारेभ्यः। (१६अ० २७क०) कुलालेभ्यः। भकारादौ विभक्तिप्रत्यय इति किम्। (२४अ० ४०क०) कर्णो गर्दभः। (१६अ० ८५क०) कुम्भो वनिष्ठुः। भकारादाविति किम्। अग्निषु॥

## स्विति चानतौ॥ १४॥

सु इत्येतस्मिंश्च विभक्तिप्रत्ययेऽनतावग्रहो भवति। यथा (१२अ० ३१क०) अप्स्वित्यप्। सु। अग्ने। सधिः। (१७अ० ४१क०) अभि। प्र इहि। निः। दह। हृत्स्विति हृत्। सु। अनताविति किम्। ऋप्सु। अग्निषु। (१७अ० १३क०) स्रुषु। विभक्तीति किम्। (८अ० १८क०) असुम्। ह्रस्वव्यञ्जनाभ्यामिति पूर्वसूत्रादनुवर्त्तते। ताभ्यामिति किम्। यासु॥

## वर्णसङ्ख्येऽन्यतरतः ॥ १५ ॥

वर्णसमासः सङ्ख्यासमासश्चान्यतरतो विकल्पेनावगृह्यते। वर्णसमासो भवति यथा (२४अ० २क०) धूम्ररो॑हितऽइति धूम्र। रो॑हितः। कर्कन्धु॑रोहितऽइति कर्कन्धु॑। रोहितः। संख्यासमासो भवति यथा (१८अ० २४क०) पञ्चदशेति पञ्च। दश। त्रयो॑दशेति त्रयः। दश॥

## अनुदात्तोपसर्गे चाख्याते ॥ १६ ॥

अनुदात्त उपसर्गोऽस्येत्यनुदात्तोपसर्गमाख्यातं तस्मिन्नवग्रहो भवति। यथा (२५अ० ३७क०) यत्। अश्वाय। वासः। उपस्तृणन्तीत्यु॑प। स्तृणन्ति॑। (२५अ० ३२क०) अभि। शूलम्। निहतस्येति नि। हतस्य। अवधावतीत्यव। धावति॥

## गिरित्रशयोः ॥ १७ ॥

गिरिशब्दोऽवगृह्यते त्रशयोः प्रत्यययोः परयोः। यथा (१६अ० ३क०) शिवाम्। गिरित्रेति गिरि। त्र। (१६अ० ४क०) गिरिशेति गिरि। श। अच्छ। वदामसि॥

## इवकाराम्रेडितायनेषु च ॥ १८ ॥

इवकार आम्रेडित अयन एतेषु सुप्रत्ययेषु परभूतेषु अवग्रहो भवति। इवे यथा (२०अ० ७०क०) सुचीवेति सुचि। इव। घृतम्। चम्वीवेति चम्वी। इव। सोमः। कारे यथा। (२२अ० ७क०) हिङ्कारायेति हिम्। कारायं। (१९अ० १७क०) वषट्कारेभिरिति वषट्। कारेभिः। आहुतीरित्या। हुतीः। आम्रेडिते यथा (२७अ० ४१क०) यज्ञायज्ञेति यज्ञा। यज्ञा। वः। (१५अ० २६क०) सठं० समिति सम्। सम्। इत्। (२६अ० १२क०) यतो॑यत॰

ऽइति यत॑+ । यत॒ः । यथने यथा (२२अ० ७क०) आयना॑-
येत्या । अर्यनाय । (२२अ० ७क०) प्रायनायेति॑ प्र । अर्यनाय ॥

एकात्समीची ॥ १९ ॥

एकशब्दात्परः समीचीशब्दोऽवगृह्यते । यथा (१२अ०
२क०) शिशु॑म् । एक॑म् । समीचीऽइति॑ सम् । ईची । एका-
दिति किम् । (११अ० २८क०) स्वर्वि॑देति॑ स्व॒ः । विदा । समी-
चीऽइति समीची॑ । उरसा । अर्वा ॥

त्वायवः शंय्योर्बहिर्द्धाऽस्मयुं मृण्मयीं सुम्न-
याऽऽशुया साधुया धृष्णुया विशालमनुया ॥२०॥

एतानि पदानि सावग्रहाणि भवन्ति । त्वायवो यथा
(२०अ० ७८क०) सुता॒ः । इमे । त्वायवऽइति॑ त्वा । यव॑+ ।
शंय्योर्यथा (३अ० ४२क०) शिवम् । शग्मम् । शंय्योरिति
शम् । यो॒ः । बर्हिर्द्धा यथा (५अ० ११क०) इदम् । अहम् ।
तमम् । वा॒ः । बुर्हिर्द्धेति॑ बर्हि॒ः । धा । ग्रज्ञात् । अस्मयुंर्यथा
(११अ० ११क०) अग्निम् । भरन्तम् । अस्मयुमित्य॑स्म । युम् ।
मृण्मयीं यथा (११अ० ५६क०) महीम् । मृण्मयीमिति॑ मृत् ।
मयी॑म् । योनिम् । अग्नये॑ । सुम्नया यथा (१२अ० ५४क०)
धीरा॒ः । देवेषु॑ । सुम्नयेति॑ सुम्न । या । आशुया यथा (१३अ०
८क०) तव॑ । भ्रमास॑+ । आशुयेत्या॑शु । या । साधुया यथा
(१४अ० १क०) आ । सीद । साधुयेति॑ साधु । या । धृष्णुया
यथा (२७अ० ३७क०) चित्र । वज्रहस्तेति॑ वज्र । हस्त ।
धृष्णुयेति॑ धृष्णु । या । मह॒ः । विशालंय्यथा (१४अ० ८क०)
हृष्टि+ । विशालमिति॑ वि । शालम् । पुरु॑ष॒ः । अनुया यथा
(१५अ० ६क०) अह॑+ । अनुयेत्य॑नु । या । आदया । रात्री॑म् ।
उशिजा॑ । वसुभ्यऽइति वसु॑ । भ्य॒ः ॥

मृगयुमुभयाद्दतोऽपामार्गंकिम्पूरुषमिति च ॥ २१ ॥

एतानि पदानि सावग्रहाणि भवन्ति। मृगयुँर्यथा (३०अ० ५क०) मृत्यवे॑। मृगयुमिति॑ मृग। युम्। उभयाद्दतो यथा (३१अ० ८क०) ये। के। च। उभयद॑तऽइत्यु॑भय। दतः। अपामार्गं यथा (३५अ० १०क०) अपा॑मार्गं। अपमार्गेत्य॑प। मार्ग। त्वम्। अस्मत्। किम्पूरुषँर्यथा (३०अ० १४क०) पर्व॑तेभ्यः। किम्पूरुषम्। किम्पुरुषमिति॑ किम्। पुरुषम्॥

पारावतानाग्निमारुताश्चेति जातूकर्ण्यस्य ॥ २२ ॥

पारावतान् आग्निमारुता इत्येते पदे सावग्रहे भवतो जातूकर्ण्यस्याचार्यस्य मतेन। यथा (२४अ० २५क०) अक्ष्णे॑। पारा॑वतान्। (२४अ० ७क०) कल्माषाः। आग्निमारुताऽइत्या॑ग्नि। मारुताः। जातूकर्ण्यस्येति किम् (२४अ० ७क०) पारा॑वतान्। आग्निमारुताः॥

अधीवासमित्येके ॥ २३ ॥

अधीवासमित्येतत्पदमेके आचार्य्याः सावग्रहं कुर्वन्ति। (२५अ० ३७क०) अधिवासमित्य॑धि। वासम्। या। हिर॑ण्यानि। एक इति किम्। अधीवासम् (२५अ० ३७क०)॥

प्रतिषेधेनावग्रहः ॥ २४ ॥

"समासेऽवग्रहः" इति योऽवग्रहाधिकारः कृतस्तस्यायमपवादः। प्रतिषेधवाचिना नञा निपातेन सह समासे सति अवग्रहो न भवति। यथा (११अ० २१क०) न रक्षसा। चर॑क्षसा। मनसा। (११अ० ४४क०) न दूराः। अनिराः।

अमीवाः । निषीदन् । अत्र "नलोपो नञः" इति नकारलोपः । "तस्मान्नुडचि" इति नुडागमः । प्रतिषेधेनेति किम् । (१अ० २९क०) अनिंशितऽइत्यनि । शितः । असि ॥

## उत्तरेण चाकारेण ॥ २५ ॥

प्रतिषेधवाचिनो नञ्निपातादुत्तरेण चाकारेण सह समासेऽवग्रहो न भवति । यथा (१६अ० १४क०) अनातताय । धृष्णवे । (२७अ० ७क०) अनाधृष्यः । जातवेदाऽइति जात । वेदाः ॥

## द्वापूर्वम् ॥ २६ ॥

द्वापदपूर्वं समासपदं नावगृह्यते । यथा (१७अ० २५क०) द्वादश । (१४अ० १८क०) द्वाविंशतिः । (१७अ० २५क०) द्वाविंशत् ॥

## सङ्ख्यापूर्वस्य धा ॥ २७ ॥

सङ्ख्यापूर्वपदो धापदोत्तरपदः समासो नावगृह्यते । यथा (८अ० ५५क०) अष्टधा । दिवम् । (२३अ० ५०क०) कति । होमासः । कतिधा । समिद्धऽइति सम् । इद्धः । सङ्ख्यापूर्वइति किम् । (५अ० ११क०) इदम् । अहम् । तप्तम् । वाः । बहिर्धेति बहिः । धा ॥

## द्वन्द्वानि द्विवचनान्तानि स्वरान्तपूर्वपदानि ॥ २८ ॥

द्वन्द्वसमासपदानि द्विवचनान्तानि स्वरान्तपूर्वपदानि नावगृह्यन्ते । यथा (७अ० ८क०) अयम् । वाम् । मित्रावरुणा । (७अ० ३०क०) इन्द्राग्नीऽआगतम् । (२अ० १५क०) अग्नीषोमयोः । उज्जितिम् । द्वन्द्वानीति किम् । (१अ० ९क०)

अश्ऌ॑तमसि। हृविर्धानमिति॑ हृविः। धानम्। स्वरान्तपूर्व-पदानीति किम्। (४अ० ८कं०) ऋृक्सा॒मयो॒रित्यृ॑क्। सामयोः। शिल्पे॑ ॥

## तद्धिते चैकाक्षरहृद्धावनिहिते ॥ २९ ॥

समासादुत्तरकालं तद्धिते उत्पन्नेऽवग्रहो न भवति यत्र तद्धितजनितैकाक्षरे पूर्वपदे वृद्धिर्भवति। यदि च तत्पूर्व-पदेन सह अनिहितं भवति अव्यवहितं भवति यदि पूर्वपद-हृद्धा उत्तरपदमव्यवहितं भवतीत्यर्थः। यथा (११अ० ७कं०) वैष्टु॑भेन॒ छन्द॑सा। (२०अ० ८कं०) मे। भाग॑ः। सौभाग्य॑म्। तद्धित इति किम्। (२३अ० ३१कं०) गा॒य॒त्री। त्रि॒ष्टुप्। त्रिस्तुबिति॑ त्रि। स्तुप्। (२५अ० १४कं०) सु॒भगेति॑ सु। भगा। एकाक्षरहृद्धाविति किम्। (२४अ० ३१कं०) प्र॒युःऽ। प्रा॒जा॒पत्यऽइति॑ प्राजा। प॒त्यः। अनिहित इति किम्। साम्राज्यमिति॒ साम्। राज्यम्। अत्र पूर्वपदोत्तरपद-योर्व्यञ्जनेन व्यवधानं कृतम् ॥

## अश्वतिसहत्योः क्तलोपे ॥ ३० ॥

अश्वतेर्धातोः सहतेश्च क्तप्रत्ययलोपे सति अवग्रहो न भवति। अश्वतेर्न भवति यथा (१८अ० २कं०) प्राङ् (१०अ० २८कं०) प्र॒त्यङ्। सहतेः खल्वपि यथा (१८अ० ३६कं०) ऋत-धामा। (१७अ० ३६कं०) दु॒श्च॒व॒नःऽ पृ॑तना॒षाट्। अश्वतिसह-त्योरिति किम्। (२७अ० १२कं०) सु॒कृदिति॑ सु। कृत्। दे॒वः। स॒वि॒ता। क्तलोप इति किम्। (१८अ० ५०कं०) आश्चेत्या॒। अश्व॑। जानु (१८अ० ६२कं०) पृ॒तनासह्यायेति॑ पृतना। सह्याय ॥

## अनुवसुभ्याम् ॥ ३१ ॥

उत् सु इत्येताभ्यां परयोरश्चतिसहत्योः क्लोपे सत्यव-ग्रहो भवति । यथा (१५अ० २२क०) उ॒द्व्यश्व॒मित्यु॑त् । व्यश्वम् । अ॒श्वे॒त् । (१३अ० २क०) सु॒रुच॒ऽइति॑ सु॒ । रुचः । वे॒नः । आ॒वः । (२५अ० २३क०) सुप्रा॒ङिति॑ सु । प्राङ् । आजः । अधस्तनयोगस्यापवादः ॥

## समिदाभ्याँ वत्सरः ॥ ३२ ॥

सम् इदा एताभ्यां परो वत्सरशब्दो नावगृह्यते । यथा (२७अ० ४४क०) सं॒व॒त्स॒रः । अ॒सि॒ । इ॒दा॒व॒त्स॒रः । समिदाभ्या-मिति किम् । (२७अ० ४४क०) प॒रि॒व॒त्स॒रऽइति॑ परि । व॒त्स॒रः । इ॒द्व॒त्स॒रऽइती॑त् । व॒त्स॒रः ॥

## प्राग्निभ्यामनिन्धौ प्रश्लेषे ॥ ३३ ॥

प्र अग्नि इत्येताभ्यां प्रश्लिष्टसन्धाववग्रहो न भवति । इन्धिदीप्तावित्यमुन्धातुं वर्जयित्वा । प्रशब्दाद्भवति यथा (१८अ० २क०) प्रा॒णः । अग्निशब्दाद्भवति यथा (१८अ० १६क०) आ॒ग्नी॑ध्रम् । यत् । सर॑स्वति । प्राग्निभ्यामिति किम् । (१६अ० ३८क०) वीध्रायेति॒ वि । ई॒ध्राय । अनिन्धाविति किम् । प्रे॒द्धऽइति॒ प्र । इ॒द्धः । प्रश्लेष इति किम् । (२२अ० ७क०) प्राय॑णाय । प्रा॒य॒नायेति॑ प्र । अ॒य॒नाय॑ ॥

## पाङ्क्वानुद्रोऽब्भ्राय सर्ठ०शयात् ॥३४॥

पाङ्क्तान् उद्रः अब्भ्राय एतानि पदानि संशयान्नावगृ-ह्यन्ते । पङ्क्तेः पूर्वपदं वायतेरुत्तरपदं, पातेर्वा पूर्वपदं तनो-तेरुत्तरपदम् । तथा उद्रः उत् ऊर्ध्वं द्रवतीति उद्रः उत्शब्दः पूर्वपदं द्रवतेरुत्तरपदम् । यद्वा उत् रातीति उद्रः । उत् पूर्व-पदं रातेरुत्तरपदम् । तथा अब्भ्रशब्दः अपो बिभर्त्ति धारय-

ीत्यब्भ्रः। अप्शब्दः पूर्वपदं बिभर्त्तेरुत्तरपदम्। यद्वा। अभ्रं
भ्रं मभ्रचरमत्यर्थाः। इत्यभ्रतेरेवाभ्रम्। एवमेतानि पदानि
ूर्वोत्तरपदसंशयान्नावगृह्यन्ते। हेतुवचनादन्यत्रापि यत्र
ंशयस्तत्रावग्रहो न भवति। यथा (२४अ० २६क०) अन्तरि-
ज्ञाय प्राङ्क्वान्। (२२अ० २४क०) अपामुद्गो मासाम्
२२अ० २४क०) अब्भ्राय स्वाहा। एतान्युदाहरणानि पद-
ंहिताया अन्यान्यपि यथासम्भवमूह्यानि चेति॥

**जनयत्याऽओषधयो वृषायिषत च नास्म-
भ्यमजावयो वलगम्॥ ३५॥**

एतानि पदानि नावगृह्यन्ते। यथा (१अ० २२क०) जन-
ात्यै। त्वा। (११अ० ४४क०) ओषधयः। प्रति। मोदध्वम्।
२अ० ३०क०) आ। वृषायिषत। (३अ० ३२क०) नहि।
ाषाम्। अमा। चन। (३अ० ३२क०) कदा। चन। स्तरीः।
असि। (४अ० १७क०) पावकः। अस्मभ्यम्। शिवः। भव।
हस्वव्यञ्जनाभ्यां भकारादौ विभक्तिप्रत्ययः" इत्यस्यापवादः।
अजावयो यथा (३अ० ४२क०) उपहूताऽइत्युप। हूताः।
अजावयः। "समासेऽवग्रहः" इत्यस्यापवादः। वलग यथा
५अ० २३क०) इदमहन्तं वलगमुत्किरामि॥

**समानोऽनश्वमेधे॥ ३६॥**

समानशब्दोऽश्वमेधमन्त्रमुक्त्वाऽन्यत्र नावगृह्यते। यथा
५अ० २३क०) यमे समानः। यमसमानः। अनश्वमेध
इति किम्। (२२अ० ३३क०) समानो यज्ञेन कल्पताएँ स्वाहा।
समानऽइति सम्। आनः। एकस्मै। द्वाभ्याम्॥

**वायुरसजातः समुद्रमहोरात्रे विश्वानरो**

विश्वाषाडाऽऽग्रयणोऽसपत्ना गोधा गोधूमाऽआशुशु-
क्षणिर्न्यग्रोधः पुरोडाशः प्रावणेभिरशीतम तस्करा
मश्मसाऽश्वत्थऽउपस्तिर्माकिर्विश्वामित्रो गोपा-
म्राऽउगमङ्गानि कक्षीवन्तमदधात्यवीरवन्नीहारेण
प्रावृता घनाघनऽइन्द्रङ्घान्यावृङ् शूघनासः कुयवं
कुचरः प्रियङ्गवो नीवाराऽएकादश षोडश चन्द्र-
माऽआयुवो व्याघ्राऽनड्वान् गविष्ठिरः कपर्दिने
पुलस्तये निषङ्गिणे कुलालेभ्यः कर्मारेभ्यः पुञ्जि-
ष्ठेभ्यो द्वीप्याय नीप्याय किꣳशिलायैलष्टदाः
शूकाराय शूक्तताय चराचरेभ्यः पारावतान् गोल-
त्तिकाऽऽखुरजगरो विपन्यवो दाक्षायणाऽआयु-
र्धꣳ सुरामं बृहस्पतिर्वनस्पतिर्नराशꣳसः सुर-
भिर्नरिष्ठायै ॥ ३७ ॥

वायुरित्यादीनि पदानि नावगृह्यन्ते। वायुर्यथा (३३अ० ४४क०) वायुः पूषा स्वस्तये। असजातो यथा (५अ० २३क०) यमसंजातो निचखान। समुद्रं यथा (६अ० २१क०) समुद्रं गच्छ स्वाहा। अहोरात्रे यथा (३१अ० २२क०) अहोरात्रे पार्श्वे। विश्वानरो यथा (३३अ० २३क०) अर्चा विश्वानराय। विश्वाहा यथा (१७अ० ४८क०) विश्वाहा शर्म यच्छतु। आग्रयणो यथा (७अ० २०क०) आग्रयणोऽसि। असपत्ना यथा (७अ० २५क०) असपत्नाः सममनमस्करत्। गोधा यथा २४अ० ३५क०) गोधा कालका। गोधूमा यथा (१८अ०

१२क०) गोधूमाश्च मे। आग्रयणियथा (११अ० २७क०) त्वमाग्रयुणर्णिः। न्यग्रोधो यथा (२२अ० १४क०) न्यग्रोधश्चमसैः। पुरोडाशो यथा (२१अ० ५९क०) पचन् पुरोडाशान्। ग्रावणेभिर्यथा (१२अ० ५०क०) ग्रावणेभिः। सजोषस्(ः। अधीतम यथा (२अ० २०क०) अग्नेऽदब्धायोऽशीतम। तस्करा यथा (११अ० ७७क०) तस्कराँ२॥ऽ उत। मस्मसा यथा (११अ० ७९क०) सर्वन्तम्म स्मसा कुरु। अश्वत्थे यथा (११अ० ७९क०) अश्वत्थे वो निषदनम्। उपस्तिर्यथा (११अ० १०१क०) उपस्तिरस्तु सोऽस्माकम्। माकिर्यथा (१३अ० ११क०) अग्ने माकिष्टे व्यथिः। विश्वामित्रो यथा। (१३अ० ५७क०) विश्वामित्रऽऋषिः। गोपां यथा (३अ० २३क०) गोपामृतस्य दीदिवम्। प्रउगं यथा (१५अ० ११क०) प्रउगमुक्थमव्यथायै। अङ्गानि यथा (१८अ० ३क०) अङ्गानि च मे। कक्षीवन्तं यथा (३अ० २९क०) कक्षीवन्तं यऽऔशिजः। अदधा-यथा (१९अ० ७७क०) अश्रद्धामनृतेऽदधात्। पवीरवद्यथा (११अ० ७१क०) लाङ्गलं पवीरवत्। नीहारेण प्रावृता यथा (१७अ० ३१क०) नीहारेण प्रावृता। द्वे पदे अनन्तर्हिते यथा (१७अ० ३३क०) घनाघनःऽ क्षोभणः। (१६अ० ८१क०) ईदृङ् चान्यादृङ्। द्वे पदे यथा (१७अ० १४क०) सिन्धोरिव प्राध्वने शूघनासः। कुयवं यथा (१८अ० १०क०) कुयवाश्च मे। कुचरो यथा (५अ० २०क०) मृगो न भीमः कुचरो गिरिष्ठाःऽ। प्रियङ्गवो यथा (१८अ० १२क०) प्रियङ्गवश्च मे। नीवारा यथा (१८अ० १२क०) नीवाराश्च मे। एकादश यथा (१८अ० २४क०) एकादश च मे। षोडश यथा (१८अ० २५क०) षोडश च मे। चन्द्रमा यथा (३३अ० ९०क०) चन्द्रमाऽअप्स्व। आयुवो यथा (१८अ० ३९क०) आयुवो नाम। व्याघ्रा यथा (१५अ०

१७क०) व्युम्ना ह्वृतिः । अनड्वान्यथा (२८अ० ५८क०) अनड्वा-मधोरामौ । गविष्ठिरो यथा (१५अ० २५क०) गविष्ठिरो नमसा । कपर्दिने पुलस्तये यथा (१६अ० ४३क०) नमः कप-र्दिने च पुलस्तये । द्वे पदे यथा (१६अ० २०क०) निषङ्गिणे । (१६अ० २७क०) कुलालेभ्यः । (१६अ० २७क०) कर्मारेभ्यः । द्वे पदे अनन्तर्हिते यथा (१६अ० २७क०) नमः कुलालेभ्यः । कर्मारेभ्यः । पुञ्जिष्ठेभ्यो यथा (१६अ० २७क०) पुञ्जिष्ठे-भ्यश्च । द्वीप्याय यथा (१६अ० ३१क०) द्वीप्याय च । नीप्याय यथा (१६अ० ३७क०) नीप्याय च । किंशिलाय यथा (१६अ० ४३क०) किंशिलाय च । ऐलवृदा यथा (१६अ० ६०क०) ऐलवृदाऽआयुर्युधः । शुकाराय शुक्लाय यथा (२१अ० ८क०) शुकाराय स्वाहा शुक्लाय । चराचरेभ्यो यथा (२२अ० २९क०) चराचरेभ्यः स्वाहा । पारावतान्यथा (२४अ० २५क०) अह्ने पारावतान् । गोलत्तिका यथा (२४अ० ३७क०) गोलत्तिका तेऽप्सरसाम् । आखुर्यथा (३अ० ५७क०) आखुस्ते पशुःऽ । अजगरो यथा २४अ० ३८क०) अजगरो वसूनाम् । विपन्यवो यथा (३४अ० ४४क०) तद्विप्रासो विपन्यवः । दाश्वायषा यथा (३४अ० ५२क०) यदाबध्नन्दाक्षायणाः । आयुधं यथा (१६अ० ५१क०) परमे वृक्षऽआयुधन्निधाय । सुरामं यथा (१०अ० ३४क०) यत्सुरामं व्यपिबः । बृहस्पतिर्यथा । (२६अ० ३क०) बृहस्पते ऽअति यत् । वनस्पतिर्यथा (२८अ० ३५क०) वनस्पतिः शमि-ताद्देवः । नराशंसो यथा (२८अ० २७क०) नराशंसस्य महिमानम् । सुरभिर्यथा (२५अ० ३५क०) यऽईं माहुःऽ सुरभिः । नरिष्ठायै यथा (३०अ० ६क०) नरिष्ठायै भीमलम् । यैश्च हेतुभिरेतानि पदानि नावगृह्यन्ते तान् हेतूनन्यपद-

व्याजेन विचिख्यासुराचार्य्यो वक्ष्यमाणसूत्रैर्वक्ष्यति। येषु च पदेषु वक्ष्यमाणहेतवो न सन्ति ते जातिवचनाः प्रत्येतव्याः। यथा (१७अ० १२क०) गोधूमपारावतादयः ॥

## उत्तम्भनादीन्यादिसंशयात् ॥ ३८ ॥

उत्तम्भनादीनि पदानि आदिसंशयान्नावगृह्यन्ते। यथा (४अ० ३६क०) वरुणस्योत्तम्भनमसि। (११अ० ६४क०) उत्थाय बृहती भव। (२२अ० ८क०) उत्थिताय स्वाहा। एतानि त्रीणि पदान्युदाहरणानि। उत्पूर्वपदानि स्तम्भेत्युत्तरपदं प्रथममुदाहरणम्। तिष्ठत्युत्तरपदे उत्तरे तत्र "उदः स्थास्तम्भोः पूर्वस्य" इति सकारस्य पाणिनिः पूर्वरूपतां विदधाति। अन्ये तु सकारलोपं विदधति। अत उत्तरपदस्यादिसंशयादेतानि पदानि नावगृह्यन्ते। यथैतान्येवमन्यान्यपि द्रष्टव्यानि ॥

## विशौजा इत्यन्यायसमासात् ॥ ३९ ॥

विशौजा इत्येतत्पदमन्यायसमासान्नावगृह्यते। विडौजा इति प्राप्ते यथा (१०अ० २८क०) विशौजाः। इन्द्रोऽसि विशौजाः ॥

## दित्यौही तुर्य्यौही पष्ठौही हृदयौपशेनेति च ॥ ४० ॥

एतानि च पदान्यन्यायसमासान्नावगृह्यन्ते। अत्र च "उवर्ण ओकारम्" इति ओकारे प्राप्ते औकारोऽन्यायसमासजः ॥

## दुष्टरो विष्टरो विष्टपो विष्टम्भो विष्टम्भनोम् ॥ ४१ ॥

दुष्टर इत्यादीनि पदानि नावगृह्यन्ते। अत्राचार्य्येण

कारणेनोपन्यस्तम् । तत्र तावत् दुष्टरपदं धातुसंशयान्नाव-ग्टह्यते । दुरुपसर्गः पूर्वपदन्तरतेः स्तृणातेर्वोत्तरपदमतो धातु-संशयान्नावग्टह्यते । विष्टरादीनि तु अन्यायषत्वसंहितानि । अतः षत्वागमोऽपि पदकारैर्न कृतः ॥

**ऊवध्यमुगणाऽउखऽदुष्कृतिरिष्कर्त्तारमुद-रमित्युपसर्गैकदेशलोपात् ॥ ४२ ॥**

एतानि पदान्युपसर्गैकदेशलोपान्नावग्टह्यन्ते । तत्र दुष्कृतिः । दुष्कर्त्तारमित्यनयोः पदयोर्निरुपसर्गस्य नकार-लोपान्नावग्रहः शेषाणामुद उपसर्गस्यान्त्यवर्णलोपान्नावग्रहः । ऊवध्यं यथा (१९अ० ८४क०) ऊवध्यं वातर्ठं० सन्ववन्तदारात् । उगणा यथा (१६अ० २४क०) नमऽउगणाभ्यः । उखे यथा (११अ० ६१क०) अभीन्धतामुखे । दुष्कृतिर्यथा (१२अ० ७४क०) दुष्कृतिर्नाम वः । दुष्कर्त्तारं यथा (१२अ० १०१क०) दुष्कर्त्ता-रमध्वरस्य । उदरं यथा (२०अ० ८क०) पृष्टीर्मे राष्ट्रमुदरम् ॥

**सँस्कृतर्ठं० सँस्कृतिर्माँस्पचन्याः पूँस्चलूमित्य-नुनासिकोपधत्वात् ॥ ४३ ॥**

एतानि पदानि अनुनासिकोपधत्वान्नावग्टह्यन्ते । अत्र च "शस्से पकारादुकारोदयात्" इत्यादिभिः सूत्रैरुपधानु-नासिकत्वमुक्तम् । पक्षे चानुस्वारः, अतो वाजसनेयिनामुप-धानुनासिकत्वान्नावग्रहः । काण्वानां तु वक्ष्यमाणसूत्रेण । संस्कृतं यथा (४अ० ३४क०) तन्नौ सँस्कृतम् । संस्कृतिर्यथा (७अ० १४क०) सा प्रथमा सँस्कृतिः । मांस्पचन्या यथा (२५अ० ३६क०) माँस्पचन्याऽऽउखायाःऽ । पूँस्चलं यथा (३०अ० २०क०) नर्माय पूँस्चलूर्ठं० हसाय ॥

अनुस्वारागमत्वादित्येके ॥ ४४ ॥

अनुस्वारागमत्वाद्धेतोरेवैक आचार्य्या एतान्येव पदानि नावगृह्णन्ति। सꣳस्कृतम्। सꣳस्कृतिः। माꣳस्पचन्याः। पुꣳस्वलम्। काण्वादीनामयं पाठो बोध्यः॥

परीत्तोऽवत्तानाꣳ सुवितास सन्धिरिति च ॥ ४५ ॥

एतानि पदानि यथायोगं कारणैर्नावगृह्यन्ते। तत्र तावत्परीत्तः। अवत्तानाम्। सन्धिः। एतानि धात्वेकदेशलोपान्नावगृह्यन्ते। सुवितायेत्येतत्पदं सुइताय सुगताय वा गृह्यते। सुताय प्रजायै वा इति धातुसंशयान्नावगृह्यते। यथा (८अ० ८क०) ध्रुवे परीत्तोऽअचरत्। (२१अ० ४३क०) अङ्गादङ्गादवत्तानाम्। (१५अ० २७क०) अग्निः सुदक्षः सुविताय। (१८अ० ८क०) सन्धिश्च मे सपीतिश्च मे। इतिशब्दोऽन्यपदप्रदर्शनार्थः। यथैतानि पदानि एतैर्हेतुभिर्नावगृह्यन्ते। एवमन्यान्यपि द्रष्टव्यानि। तथा चोक्तम्। आदिमध्यान्तलुप्तानि समासान्यायभाञ्जि च। नावगृह्णन्ति कवयः पदान्यागमवन्ति च॥१॥

वृद्धं वृद्धिः ॥ ४६ ॥

इत्युक्तार्थम्॥

इति कात्यायनकृतौ प्रातिशाख्यसूत्रे

पञ्चमोऽध्यायः॥

इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते मातृमोदाख्ये प्रातिशाख्यभाष्ये पञ्चमोऽध्यायः समाप्तः।

---

## षष्ठोऽध्यायः ।

### अनुदात्तमाख्यातमामन्त्रितवत् ॥ १ ॥

"स्वरितवर्जमेकोदात्तम्पदम्" इत्यत्र नामाख्यातोपसर्गनिपातानां सामान्येन स्वरोऽभिहितः । यथा "नो नौ मे मदर्थः" इत्यादिभिर्नाम्नां विशेषस्वरोऽभिहितः । यथा "वा च कमुचित्" इत्यादिसूत्रेण निपातानां च विशेषस्वरोऽभिहितः । तथा नामाख्यातोपसर्गाणां विशेषस्वरोऽभिहितः । अतस्तत्प्रतिपादनार्थमाह । "अनुदात्तमाख्यातमामन्त्रितवत्" इति । आमन्त्रितपदवदनुदात्तमाख्यातं पदं भवति । यैरेव कारणैरनुदात्तमामन्त्रितं भवति तैरेव कारणैराख्यातमपीत्यर्थः । "पदपूर्वमामन्त्रितमनानार्थे पादादौ" इत्यामन्त्रितस्यानुदात्तत्वमुक्तमिहाऽपि तथैव भवति । एतदुक्तं भवति पूर्वपदमाख्यातमनुदात्तम्भवति तच्च नानार्थे न भवति । अपादादौ च भवति पदपूर्वम्भवति (१अ० १क०) । तद्यथा । मा वस्तेनऽईशत । (१अ० १क०) मा पती स्यात् । अनानार्थ इति किम् । (२अ० ६क०) प्राहि यज्ञं प्राहि यज्ञपतिम् । अपादादाविति किम् । (१५अ० ३क०) ऋतधामा तऽश्चोह्वे(:) । (१९अ० २क०) सपाव सोममद्रिभि(: ॥

### उपसर्ग उपसर्गे ॥ २ ॥

उपसर्गोऽनुदात्तो भवत्युपसर्गे प्रत्यये । एतच्च समासपदे एव द्रष्टव्यम् । यथा (१५अ० ५३क०) सम्प्र च्यवध्वम् । सम्प्रयातानि पथः । अत्र समुपसर्ग उपसर्गोऽनुदात्तः । उपसर्ग इति किम् । (१८अ० १६क०) प्रयतिः । प्रसितिः ॥

### आम्रेडिते सोत्तरः ॥ ३ ॥

आम्रेडिते च पदे उत्तर उपसर्गोऽनुदात्तो भवति। यथा (६अ० १८क०) सठं॰ममिति सम्। सम्। (३अ० ३४क०) उपो-पेत्युप। उप। अधस्तनयोगापवादः॥

## कृदाख्यातयोश्चोदात्तयोः॥ ४॥

उदात्ते कृत्प्रत्यये चाख्याते परभूते उपसर्गोऽनुदात्तो भवति। कृति भवति यथा (१५अ० ४४क०) स्व÷। आ। भरन्तः। (१५अ० ४७क०) विभ्राजमानः सरिरस्य मध्ये। आख्याते भवति यथा (२५अ० २८क०) ये चार्वते पचनठं॰ सम्भरन्ति। (२५अ० ३३क०) यदूवध्यमुदरस्यापवाति। कृदा-ख्यातयोरिति किम्। (२८अ० १८क०) अनुगावोऽनु भग÷ कनीनम्। उदात्तयोरिति किम्। (१८अ० १क०) प्रयतिः। प्रसितिः। (४अ० २क०) ग्रिवाः ग्रग्मामपरि दधे। यत्र चानु-दात्तत्वमुपसर्गस्य न भवति। तत्र पृथक्पदत्वमपि भवति। "स्वरितवर्जमेकोदात्तं पदम्" इति परिभाषितत्वात्॥

## नाभ्येकाक्षरस्य स्वरसन्धेयेऽकृति॥ ५॥

अभ्युपसर्ग एकाक्षरश्चोपसर्गः स्वरात्मके उपसर्गे स्वरसन्धेये चाकृति प्रत्यये नानुदात्तो भवति। अभेः स्वरात्मके भवति यथा (१२अ० ८४क०) अभि। आ। वर्त्तस्व। अभेः स्वरसन्धेये अकृति भवति यथा (१०अ० १क०) याभि÷। मित्रावरुणौ। अभि। अभिञ्जन्। (३२अ० ७क०) अभि। ऐक्षेताम्। मनसा। एकाक्षरस्य स्वरात्मके भवति यथा (१८अ० ७५क०) वि। आ। अकरोत्। (१७अ० १६क०) नि। असीदत्। एका-क्षरस्य स्वरसन्धेयेऽकृति भवति यथा (१२अ० १०२क०) सत्य-धर्मा वि आनट्। (३१अ० १०क०) यत्। पुरुषम्। वि। अदधुः। अधस्तनयोगापवादः॥

आ पूतजातयोः ॥ ६ ॥

आ इत्ययमुपसर्गः पूतजातयोः प्रत्यययोर्नानुदात्तो भवति । यथा (४अ० २क०) आ पूतः एमि । (१२अ० १३क०) आ जातो विश्वा ॥

अधिनिप्रप्रति श्रिताऽत्रिणभानवपचतेषु ॥ ७ ॥

अधि नि प्र प्रति एते उपसर्गाः श्रित अत्रिण भानव पचत एषु प्रत्ययेषु नानुदात्तो भवति । अधि यथा (२०अ० ३२क०) अधि श्रिताः । नि यथा (१७अ० १६क०) विश्वन्न्यत्रिणम् । प्र यथा (१५अ० २४क०) प्रभानवः । प्रति यथा (२१अ० ६०क०) प्रति पचता गृभीषत ॥

उन्नेषमावर्त्तऽआपनीफणत्सनिष्यदत्सँवतं प्रयाणꣳ सम्भरन्तꣳ सꣳरभध्वं प्रसितिँ विक्रमस्वेत्येतेष्वनु ॥ ८ ॥

उन्नेषम्, आवर्त्त, आपनीफणत्, सनिष्यदत्, सँवतम्, प्रयाणम्, सम्भरन्तम्, सꣳरभध्वम्, प्रसितिम् । विक्रमस्व, एतेषु प्रत्ययेषु अन्वित्ययमुपसर्गो नानुदात्तो भवति । उन्नेषं यथा (२अ० १५क०) अग्नीषोमयोरुज्जितिमनून्नेषम् । आवर्त्त यथा (२अ० २७क०) सूर्य्यस्यावृतमन्वावर्त्ते । आपनीफणद्यथा (९अ० १४क०) पथामङ्काꣳस्यन्वापनीफणत् । सनिष्यदद्यथा (९अ० १४क०) अनु सꣳ सनिष्यदत् । सँवतं यथा (११अ० १२क०) वरिष्ठामनु सँवतम् । प्रयाणं यथा (१२अ० ३क०) अनु प्रयाणमुषसो विराजति । सम्भरन्तं यथा (१३अ० ५क०) समानँयोनिमनु सञ्चरन्तम् । सꣳरभध्वं यथा (१७अ० ३८क०) इन्द्रꣳ सखायोऽनु सꣳरभध्वम् । प्रसितिं यथा (१३अ० ९क०) तृष्वी-

मनु प्रसितिन्द्रुणानः)। विक्रमस्व यथा (१२अ० ५क०) पृथिवीमन विक्रमस्व॥

## ओपप्रोदात्ते॥ ९॥

आ उप एतौ प्रोपसर्गे उदात्ते प्रत्यये नानुदात्तौ भवतः। आ यथा (१८अ० ७२क०) आ प्रयातु परावतः। (५अ० १८क०) आ प्रयच्छ दक्षिणात्। उप यथा (३४अ० १८क०) उप प्रयाहि। (२८अ० २३क०) उप प्रागाच्छसनम्॥

## अभिप्रेह्युपसम्प्रयातप्रत्यातनुष्वासुषाव॥१०॥

अभि प्रेहि उपसम्प्रयात प्रत्यातनुष्व आसुषाव एते चोपसर्गा यथागृहीता नानुदात्ता भवन्ति। यथा (१७अ० ४४क०) अभि प्रेहि निर्दह। (१५अ० ५३क०) उप सम्प्रयाताग्ने पथः)। (१३अ० १२क०) उदग्ने तिष्ठ प्रत्यातनुष्व। (१९अ० २क०) आ सुषाव सोमसद्रिभिः॥

## प्रकृत्याऽऽख्यातमाख्यातपूर्वम्॥ ११॥

यदुक्तम् "अनुदात्तमाख्यातमामन्त्रितवत्" इति तस्यायमपवादः। आख्यातपूर्वमाख्यातं प्रकृतिस्वरं भवति। उदात्तपूर्वं भवति यथा (२१अ० ४२क०) पिबन्तु। मदन्तु। व्यन्तु॥

## उदात्ताच्चामन्त्रितादनन्तरम्॥ १२॥

उदात्तस्वराच्चामन्त्रितपदादनन्तरमाख्यातं पदं प्रकृतिस्वरं भवति। यथा (८अ० ३८क०) अग्ने पवस्व (२१अ० २८क०) होतर्यज॥

## एकान्तरादपि॥ १३॥

एकेन पदेन व्यवहितादप्यामन्त्रितपदात्परमाख्यातं प्रकृतिस्वरं भवति। यथा (२२अ० ४क०) ब्रह्मन्नश्वम्भन्त्स्यामि।

१८अ० ६०क०) देवाः । मधस्याः । विद । रूपम् । अस्य
अपिशब्देन विकल्पो ज्ञेयः । क्वचिद्भवति क्वचिन्न भवति
यथा । (३अ० २८क०) इडे । आ । इहि ॥

## यद्वृत्तोपपदाच्च ॥ १४ ॥

यदो वृत्तं यद्वृत्तं सर्वविभक्त्यन्तं सर्वप्रत्ययान्तं च गृह्यते
त् । यम् । येन । यतः । यथा । यत्र । यदि । इत्यादि । यद्
त्तोपपदात्परमाख्यातं पदं प्रकृत्या भवति । (१५अ० ४९क०
माहुर्मनवस्तीर्णबर्हिषम् । (१५अ० ४९क०) येनऽऋषयस्त-
सा सत्रमायन् । (३अ० १४क०) यतो जातोऽअरोचथाः ।
३अ० २८क०) यथाऽयं वायुरेजति । (१८अ० ५८क०) यत्रऽऋष-
यो जग्मुःऽ । (२०अ० १५क०) यदि दिवा यदि नक्तमे-
ांऽसि चकृम । अत्र सर्वत्र यदि यद्वृत्तस्याख्यातपदेन सम्ब-
म्बन्धो भवति तदेवाख्यातपदं विक्रियते न तु सान्निधिमा-
ण । यथा (२०अ० १७क०) यदेकस्याधिधर्मणि तस्यावय-
नमसि । तथा चोक्तम् । यस्य येनार्थसम्बन्धो दूरस्थस्यापि
स्य तत् । अर्थतो ह्यसमर्थानामानन्तर्यमकारणमिति ॥

## हेश्च ॥ १५ ॥

हिशब्दाच्च परमाख्यातं पदं प्रकृत्या भवति । यथा (११अ०
क०) आपो हिष्ठा मयोभुवः ॥

## उत्तरेऽपि ॥ १६ ॥

उत्तरेऽपि हिशब्दे आख्यातं पदं प्रकृत्या भवति । यथा
अ० ८क०) इन्दवो वा मुशन्ति हि ॥

## नेत् ॥ १७ ॥

नेदित्यस्मान्निपातसमाहारात्परमाख्यातपदं प्रकृतिस्वरं भवति। यथा (२अ॰ १७क॰) ए॒षनेत्त्वदपचे॒त यांतै॥

## समनसस्करत्॥ १८॥

करदित्येतदाख्यातं पदं समनस इत्येतत्पूर्वं प्रकृत्या भवति। यथा (७अ॰ २५क॰) अ॒मपक्त्ताः॑ समनसस्करत्। समनस इत्येतत्पूर्वमिति किम्। (२१अ॰ २२क॰) सत्त्वौ भेषजं करत्॥

## द्वयोः पूर्वं॰ समुच्चये॥ १९॥

द्वयोराख्यातयोः समुच्चयेऽर्थे वर्त्तमानयोः पूर्वमाख्यातं पदं प्रकृत्या भवति। समुच्चयो नाम द्वयोराख्यातयोरेकस्मिन्नर्थे समावेशः। यथा (११अ॰ २७क॰) शमं च स्थाः। वर्मं च स्थः। (८अ॰ २२क॰) शम्। च वक्ष्व परिं च वक्ष्व॥

## वा विचारणे॥ २०॥

द्वयोराख्यातयोर्विचारणेऽर्थे वर्त्तमानयोः पूर्वमाख्यातम्प्रकृत्या भवति, वा शब्देन चेदाख्यातयोर्योगो भवति। संहितायां प्रायश उदाहरणानि न लभ्यन्ते। रूपोदाहरणानि तु दीयन्ते। देवदत्तो भुङ्क्तां वा यज्ञदत्तो वा भुङ्क्ताम्॥

## अहविनियोगे॥ २१॥

द्वयोराख्यातयोर्विनियोगेऽर्थे वर्त्तमानयोः पूर्वमाख्यातं प्रकृत्या भवति। अहशब्देन चेदाख्यातयोर्योगो भवति। विनियोगो नाम द्वयोः पुरुषयोरेकस्मिन् कर्मणि एकस्य पुरुषस्य सम्बन्धः। अन्यस्मिन् कर्मण्यपरस्य सम्बन्धः। रूपोदाहरणान्दीयते। यथा "देवदत्तोऽहं ग्रामं गच्छतु" यज्ञदत्तोऽहं गाः पालयतु॥

## एवावधारणे ॥ २२ ॥

द्वयोराख्यातयोरवधारणेऽर्थे वर्त्तमानयोः पूर्वमाख्यातं प्रकृत्या भवति । एवशब्देन चाख्यातयोर्योगो भवति । अवधारणं नाम द्वयोः कर्मणोर्द्वयोश्च कर्त्रोरेकस्मिन् कर्मण्येकः कर्त्ताऽवध्रियते परस्मिन्नन्यः । यथा देवदत्त एव ग्रामं गच्छतु, यज्ञदत्त एव भुङ्क्ताम् ॥

## उपपदाप्रयोगेऽपि च ॥ २३ ॥

च वा ह अह एव एतानि च प्रभृतीनि यान्युपपदानि उक्तान्याख्यातस्य विकारीणि तेषामर्थो यदि कथञ्चिदवगम्यते । तथा चोक्तम् । उपसर्गात्परो यस्तु पदादिरपि दृश्यते । उच्चस्थानास्थितो यत्र गुरुं तत्रैव कारयेत् । इति तदा एतेषामुपपदानामुच्चारणेऽपि आख्यातं न विक्रियते । तथा रूपोदाहरणम् । सुखं भवथ । पवित्रकं भवथ । चशब्दोऽत्र लुप्तः । इत्थंभूतानि छन्दस्युदाहरणानि द्रष्टव्यानि ॥

## परोपापावप्रतिपर्य्यन्वप्यत्यध्याङ्प्रसन्निर्दुरुन्निविस्वभि ॥ २४ ॥

परा उप अप अव प्रति परि अनु अपि अति अधि आङ् प्र सम् निर् दुर् उद् नि वि सु अभि एते विंशतिरुपसर्गाः प्रकृतिस्वरा भवन्ति । अस्य चोपसर्गस्य "उपसर्ग उपसर्गे" इत्यादिकः पुरस्तादपवादो द्रष्टव्यः । प्रकृतिस्वरस्तु व्याकरणपठितोऽत्र गृह्यते । तथा च तत्सूत्रम् । "निपाता आद्युदात्ताः" "उपसर्गाश्चाभिवर्जम्" इति । तथा चोक्तम् । एकारोऽथ चकारो वा रेफो दीर्घपरेषु च । समुपसर्गात्ये तष्टेष्टुरेव न संशयः ॥ १ ॥ उक्तानामुपसर्गाणामनित्यमुपसर्गगुरु । यथा (३अ० ५३क०)

अनु योजान्विन्द्र ते हरी। विंशतेरुपसर्गाणामुत्ता एकाक्षरा नव। आद्युदात्ता दशैतेषामन्तोदात्तस्त्वभीत्ययम्॥

## द्विस्पर्शम्॥ २५॥

द्वौ स्पर्शौ यस्मिन् पदे तद्द्विस्पर्शं पदम्। अधिकारसूत्रमेतत्॥

## वेत्तु वित्त्वाऽस्मद्र्यक्पात्त्रमभित्त्यमृत्तिकाद्वन्द्वात्त्वरठं० समाववर्त्त्यूद्र्ध्विर्वृद्धिरराध्याऽर्द्धशुद्धबुद्धनर्त्तनिषत्तखिन्नान्नसन्नाश्च॥ २६॥

एतेषु पदेषु द्वौ स्पर्शौ भवतः। वेत्तु यथा (१अ० १८क०) प्रति त्वा पर्वती वेत्तु। द्वौ तकारौ संयोगः। वित्त्वा यथा। (२अ० २१क०) वित्त्वा गातुमित। द्वौ तकारौ वकारश्च संयोगः, अस्मद्र्यक् यथा (७अ० ३८क०) अस्मद्र्यग् वावृधे। पात्त्रं यथा (७अ० २४क०) आसन्ना पात्त्रञ्जनयन्त देवाः। द्वौ तकारौ रेफश्च संयोगः। अभित्त्यं यथा (४अ० २५क०) अभित्त्यन्देवम्। द्वौ तकारौ यकारश्च संयोगः। मृत्तिका यथा (१८अ० १३क०) अश्मा च मे मृत्तिका च मे। द्वौ तकारौ संयोगः। द्वं यथा (१२अ० ७१क०) विमुच्यद्वमघ्न्या देवयानाः। दकारधकारौ वकारश्च संयोगः। दात्त्रं यथा (१अ० ६क०) सोमस्य दात्त्रमसि स्वाहा। द्वौ तकारौ रेफश्च संयोगः। समाववर्त्ति यथा (२०अ० १३क०) समाववर्त्ति पृथिवी। रेफो द्वौ तकारौ संयोगः। ऊर्द्ध्विर्यथा (८अ० ८२क०) मत्स्यऽऊर्द्धिरसि। दकारधकारौ संयोगः। वृद्धिर्यथा (१८अ० ४क०) वृद्धश्च मे वृद्धिश्च मे। दकारधकारौ संयोगः। अराद्धैर यथा (३०अ० ९क०) अराद्ध्याऽएदिधिषुः पतिम्। दकारधकारौ यकारश्च संयोगः। अर्द्धो यथा

(१७अ० २क०) अन्तश्च परा॑ऽअस्मि॑ता मे॑ । रेफदकारधकाराः संयोगः । शुद्धो यथा (२४अ० ३क०) शुद्धबा॑लः सर्व॒शु॑द्धबा॑लः । दकारधकारौ संयोगः । बुद्धो यथा (२२अ० ७क०) प्रबु॒द्धाय॒ स्वाहा॑ । दकारधकारौ संयोगः । नक्तं यथा (१३अ० २८क०) मधु॒ नक्त॑मु॒तोषसः॑ । द्वौ ककारौ तकारश्च संयोगः । निषण्णो यथा (२२अ० ८क०) निष॑ण्णाय॒ स्वाहा॑ । द्वौ णकारौ संयोगः । स्विन्नो यथा (२०अ० २०क०) स्वि॒न्नः स्ना॒तो मला॑दिव । द्वौ नकारौ संयोगः । अन्नं यथा (११अ० ८३क०) अन्न॑प॒तेऽन्न॑स्य । द्वौ नकारौ संयोगः । मन्नो यथा ( ८अ० ६८क० ) म॒न्नऽ सिन्धु॑ः । द्वौ नकारौ संयोगः । "स्वरात् संयोगादिः" इत्यस्य प्रायशोऽपवादभूतमेतत् सूत्रम् ॥

## न त्सत्रचित्रश्वित्रसत्रतत्रयत्रेभ्यस्त्वेकम् ॥ २७ ॥

त्स त्र चि श्वि स त य एतेभ्यः परस्त्रशब्दो न द्विरुच्यते एकमेव व्यञ्जनं भवति । त्स यथा (१०अ० ८क०) त्स॒त्रस्य॒ योनि॑रसि । त्र यथा (१०अ० ८क ) वृ॒त्रं व॑धेत् । चि यथा (७अ० ४२क०) चि॒त्रं दे॒वाना॑म् । श्वि यथा (२४अ० ३८क०) श्वि॒त्रऽआ॑दि॒त्याना॑म् । स यथा (८अ० ५२क०) स॒त्रस्य॒ऽऋद्धिः॑ । त यथा (१३अ० ३१क०) तत्र॒ गच्छ॑ । य यथा (१३अ० ३१क०) य॒त्र॒ पूर्वे॒ परे॑ताः । "स्वरात् संयोगादिः" इत्यस्यायमपवादः ॥

## ईध्राय वार्ध्रीनसोद्राश्वरास्त्वेत् ॥ २८ ॥

ईध्राय वार्ध्रीनस उद्रः एते स्पर्शाः संयोगादयो न द्विरुच्यन्ते । इदद्रव्यवचनात्मेवन्ति । ईध्राय यथा (१६अ० ३८क०) नमो॒ वीध्र्या॑य च । धकाररेफौ यकारश्च संयोगः । वार्ध्रीनसो यथा (२४अ० ३८क०) वार्ध्री॒न॒सस्ते । रेफधकारौ रेफश्च संयोगः ।

उद्रो यथा (२४अ० ३७क०) अपामुद्रो मासाङ्कश्यप+। चरद्रव्यवचना इति किम्। (२४अ० २१क०) समुद्राय शिशुमारान्। अत्र समुद्रशब्देन पार्थिवः समुद्र उच्यते॥

## उपोत्थित उत्तम्भनमुत्तभानोत्थायोत्थिताय्रेति त्रीणि॥ २९॥

उपोत्थितः उत्तम्भनम् उत्तभान उत्थाय उत्थिताय एतेषु पदेषु त्रीणि स्पर्शाक्षराणि व्यञ्जनानि भवन्ति। उपोत्थितो यथा (८अ० ५५क०) क्रयायोपोत्थितोऽसुरः। द्वौ तकारौ थकारस्य संयोगः। उत्तम्भनं यथा (४अ० ३६क०) वरुणस्योत्तम्भनम्। त्रयस्तकाराः संयोगः। उत्तभान यथा (१७अ० ७२क०) दिवमुत्तभान तेजसा। त्रयस्तकाराः संयोगः। उत्थाय यथा (११अ० ६४क०) उत्थाय बृहती भव। द्वौ तकारौ थकारस्य संयोगः। उत्थिताय यथा (२२क० ८क०) उत्थिताय स्वाहा। द्वौ तकारौ थकारस्य संयोगः॥

## बहिरङ्क्ताम्भद्रेण पृङ्क्तं पङ्क्तिः समङ्धि परिवृङ्धि पाङ्क्तानिति द्वावनुनासिकौ पूर्वावारपन्तीवर्जमिति च॥ ३०॥

बहिरङ्क्ताम् भद्रेण पृङ्क्तम् पङ्क्तिः समङ्धि परिवृङ्धि पाङ्क्तान्। एवं जातीयकेषु स्पर्शात् पूर्वौ द्वावनुनासिकौ ङकारौ भवतः। आरपन्तीशब्दं वर्जयित्वा। बहिरङ्क्तां यथा (२अ० २२क०) सम्बहिरङ्ङ्क्ताम्। भद्रेण पृङ्क्तं यथा (९अ० ४क०) सम्म। भद्रेण पृङ्ङ्क्तम्। पङ्क्तिर्यथा (१४अ० १७क०) पङ्ङ्क्तिश्छन्द+। समङ्धि यथा (१३अ० ४१क०) पर्यस्रा समङ्ङ्धि। परिवृङ्धि यथा (१३अ० ४१क०) परि वृङ्ङ्धि

ष्टरसा । प्राङ्गाव्यथा (२४अ० २६क०) अ॒न्तरि॑क्षाय प्रा॒ङ्ङ्वान् । आरपन्तीवर्जमिति किम् (२२अ० २क०) ऋ॒तस्य॑ धाम॑ त्सरमा॒रप॑न्ती ॥

## इडूँ इड्डिः ॥ ३१ ॥

इत्य स्वार्थम् ॥

## इति कात्यायनकृतौ प्रातिशाख्यसूत्रे षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते मातृमोदाख्ये प्रातिशाख्यभाष्ये षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

## अथावसानानि ॥ १

अथशब्दोऽधिकारार्थः । पदावसानान्यधिकृतानि वेदितव्यानि । पदान्तस्येतिकरणस्यादेश यः सन्धिः स उच्यत इति यावत् ॥

## कण्ठ्यस्वरमेकारेण परिगृह्णीयात् प्लुतवर्जम् ॥२॥

कण्ठ्यो ह्रस्वोऽकारो दीर्घश्चाकारः स्वरस्तमेकारेण परिगृह्णीयात् प्लुतमाकारं वर्जयित्वा । यथा (१अ० ८क०) य॒च्छ॑न्तां॒ पञ्च॑ । पञ्चेति॒ पञ्च॑ । (११अ० ८क०) द्र॒वि॒ण॒स्यु॒र्वि॑प॒न्यया॑ । वि॒प॒न्ययेति॑ विप॒न्यया॑ । प्लुतवर्जमिति किम् । (२२अ० ४८क०) वि॒वे॒शा॒३ इति॑ विवेशा ॥

## ईवर्णमीकारेण ॥ ३ ॥

ईवर्णमीकारेण परिगृह्णीयात् । यथा (१अ० १क०) प॒शून्

पाहि। पाहीति पाहि। (७अ० १०क०) अश्विना सनृतावती। सनृतावतीति सु। नृतावती॥

## उवर्णं वकारेण ॥ ४ ॥

उवर्णं वकारेण परिगृह्णीयात्। यथा (३३अ० १२क०) तवं द्युम्नान्युत्तमानि सन्तु। सन्त्विति सन्तु॥

## औकारं च ॥ ५ ॥

औकारं च वकारेण परिगृह्णीयात्। यथा (९अ० ३०क०) अभिविश्वान्यसौ। असावित्यसौ॥

## ह्रस्वकण्ठ्योपधं विसर्जनीयान्तमरिफितं विहृत्त्या ॥ ६ ॥

विसर्जनीयान्तम्पदं ह्रस्वाकारोपधं रिफितं यन्न भवति तद्विहृत्त्या परिगृह्णीयात्। यथा (३अ० १५क०) होता यजिष्ठोऽअध्वरेष्वीड्य॑ः। ईड्य॒ऽइतीड्य॑ः। (३अ० १६क०) शुक्रन्दुह्रेऽअक्र॑यः। अक्र॑यऽइत्यक्र॑यः। अरिफितमिति किम्। (१३अ० ३क०) सतश्च योनिमसतश्च वि वः। वरिति वः। सुरुचो वेनऽआवः। आवरित्यावः॥

## दीर्घकण्ठ्योपधँविसर्जनीयान्तमेकारान्तमैकारान्तं प्लुतं प्रगृह्यं च ॥ ७ ॥

दीर्घाकारोपधं विसर्जनीयान्तं च यत्पदं तद्विहृत्त्या परिगृह्णीयात्। एकारान्तमैकारान्तं प्लुतं प्रगृह्यं च। एतानि च पदानि विहृत्त्या परिगृह्णीयात्। दीर्घाकारोपधं विसर्जनीयान्तमुदाहरणं यथा (३अ० १५क०) यतो जातोऽअरोचथाः। अरोचथाऽइत्यरोचथाः। एकारान्तं यथा (३अ० ११क०) मन्म वोचेमाग्नये। अग्नयऽइत्यग्नये। ऐकारान्तं यथा

(३अ० १३क०) उभा राधस: सह मादयध्यै। मादयध्या॰ऽइति मादयध्यै। प्लुतं यथा (२३अ० ४९क०) भुवनमाविवेशा३। विवेशाऽइति विवेशा३। प्रगृह्यं यथा (३३अ० ५क०) अन्याऽन्यं वत्समुपधापयेते। धापयेतेऽइति धापयेते॥

## औकारान्तञ्चैके ॥ ८ ॥

औकारान्तं च पदमेके आचार्य्या विकृत्या परिगृह्णन्ति। यथा (९अ० ३०क०) अभिषिञ्चाम्यसौ। असाऽइत्यसौ। एक इति किम्। असावित्यसौ॥

## भाव्युपधं च रिह्विसर्जनीयान्तानि रेफेण ॥ ९ ॥

अकण्ठ्यो भावीत्युक्तम्। भाव्युपधं रिह्विसर्जनीयान्तं रिफितविसर्जनीयान्तं च यत्पदं तद्रेफेण परिगृह्णीयात्। यथा (१२अ० ४३क०) अग्निमीडे पूर्वाचित्तिनमोभि:। नमोभिरिति नम:। भि:। (२३अ० ५९क०) सप्रथ्कु:। कुरिति क:, (१३अ० ३क०) सतश्च योनिमसतश्च वि व:। वुरिति व:॥

## प्रथमान्तन्तृतीयेन ॥ १० ॥

प्रथमान्ता: कचटतपा: तृतीयान्ता गजडदबा: वर्गप्रथमान्तं पदं स्ववर्गतृतीयेन वर्णेन परिगृह्णीयात्। यथा (२१अ० २क०) विश्वा द्वेषांᳬसि प्र मुमुग्ध्यस्मत्। अस्मदित्यस्मत्। (१७अ० ८९क०) समन्तत्वमानट्। आनडित्यानट्॥

## उत्तमान्तमुत्तमेन ॥ ११ ॥

उत्तमान्तं पदमुत्तमेनैव परिगृह्णीयात्। यथा (२०अ० ८१क०) वर्त्तीरुद्रा नृपाय्यम्। नृपाय्यमिति नृपाय्यम्॥

## इद्धं इद्धिः॥ १२॥

इत्युक्तार्थम्॥

## इति कात्यायनकृतौ प्रातिशाख्यसूत्रे सप्तमोऽध्यायः॥

इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते मातृमोदाख्ये प्रातिशाख्यभाष्ये सप्तमोऽध्यायः समाप्तः॥

---

## अष्टमोऽध्यायः।

## अथातो वर्णसमाम्नायं व्याख्यास्यामः॥

अथातःशब्दादुक्तार्थौ वर्णा यस्मिन् समाम्नाये पठ्यन्ते स वर्णसमाम्नायस्तं व्याख्यास्याम इति प्रतिज्ञा समाधानार्थम्॥

## तत्र स्वराः प्रथमम्॥ १॥

व्याख्यायन्त इति शेषः। तद्यथा। अइति। आइति। आ३इति। इइति। ईइति। ई३इति। उइति। ऊइति। ऊ३इति। ऋइति। ॠइति। ॠ३इति। ऌइति। ॡइति। ॡ३इति॥

## अथ सन्ध्यक्षराणि॥ २॥

व्याख्यायन्त इति सूत्रशेषः। एइति। ए३इति। ऐइति। ऐ३इति। ओइति। ओ३इति। औइति। औ३इति॥

## इति स्वराः॥ ३॥

व्याख्याता इति सूत्रशेषः॥

## अथ व्यञ्जनानि॥ ४॥

व्याख्यायन्त इति सूत्रशेषः। तद्यथा। किति खिति गिति

घिति ङिति कवर्गः । चिति छिति जिति झिति ञिति चवर्गः । टिति ठिति डिति ढिति णिति टवर्गः । तिति थिति दिति धिति निति तवर्गः । पिति फिति बिति भिति मिति पवर्गः ॥

## इति स्पर्शाः ॥ ५ ॥

व्याख्याताः इति सूत्रशेषः ॥

## अथान्तस्थाः ॥ ६ ॥

व्याख्यायन्त इति शेषः । यिति रिति लिति विति ॥

## अथोष्माणः ॥ ७ ॥

व्याख्यायन्त इति शेषः । शिति षिति सिति हिति ॥

## अथायोगवाहाः ॥ ८ ॥

व्याख्यायन्त इति शेषः । अकारादिना वर्णसमाम्नायेन संहिताः सन्त एते वहन्त्यात्मलाभं प्राप्नुवन्त्ययोगवाहाः । तथाहि ॥

## ᳵक इति जिह्वामूलीयः ॥ ९ ॥

इति ककारपूर्वं जिह्वामूलीयं दर्शयति तथा ॥

## ᳶप इत्युपध्मानीयः ॥ १० ॥

इति पकारपूर्वमुपध्मानीयं दर्शयति एवमन्यत्रापि द्रष्टव्यम् ॥

## अं इत्यनुस्वारः ॥ ११ ॥

इति स्वरपूर्वमनुस्वारं दर्शयति ॥

## अः इति विसर्जनीयः ॥ १२ ॥

इति स्वरपूर्वं विसर्जनीयं दर्शयति ॥

हुँ इति नासिक्यः ॥ १३ ॥

अयमृक्शाखायां प्रसिद्धः ॥

कुँ खुँ गुँ घुँ इति यमाः ॥ १४ ॥

इति यमसंज्ञका वर्णा विंशतिसंख्यका भवन्तीत्येतच्च-तुर्थाध्याये व्याख्यातम् ॥

एते पञ्चषष्टिवर्णा ब्रह्मराशिरात्मवाचः ॥१५॥

य एते पञ्चषष्टिवर्णास्ते समस्ता एव त्रयीलक्षणो ब्रह्म-राशिः । एत एव कदाचिदानुपूर्वा व्यवस्थिताः सन्त ऋग्यजुः-सामाख्या भवन्तीत्यर्थः । लौकिक्या अपि वाचोऽयमेवात्मा । एतदेव स्पष्टीकर्त्तुमाह ॥

यत्किञ्चिद्वाङ्मयं लोके सर्वमत्र प्रतिष्ठितम् ॥१६॥

यत्किञ्चिद्वाङ्मयं लोके इत्यादि, एते पञ्चषष्टिवर्णा लोके वेदे च प्रतिज्ञाताः । यत्किञ्चिद्वाङ्मयं लोके इत्यादिना ते च लोके लोकैरनियतदेशकालाः प्रयुज्यमानाः सन्तो दृष्टाः । अतो वेदे तन्नियमार्थः स्वाध्यायविधिः क्रियते ॥

शुचिना ॥ १७ ॥

स्नानाचमनादिभिः शौचयुक्तेन ब्रह्मचर्य्यवता त्रैवर्णिकेन स्वाध्यायोऽध्येतव्यः ॥

शुचौ देशे ॥ १८ ॥

अनुपहतदेशे स्वाध्यायोऽध्येतव्यः । तथा चोक्तम् । द्वावेतौ वर्जयेन्नित्यमनध्यायौ प्रयत्नतः । स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः ॥ १ ॥

शूद्रपतितयोरसꣳश्रावꣳ स्वाध्यायोऽध्येतव्यः ॥ १९ ॥

शूद्रपतितादयो न शृण्वन्ति तथा स्वाध्यायोऽध्येतव्यः ॥

ज्ञाने ॥ २० ॥

एवं स्वाध्यायविधिमुक्त्वाऽधुना वेदस्य ग्रन्थतोऽर्थतश्च परिज्ञाने फलमाह ॥

पौरुष्यम् ॥ २१ ॥

पुरुष आत्मा तस्य विवेकस्य साधकं पौरुष्यं मुक्तिप्रदमित्यर्थः ॥

स्वर्ग्यम् ॥ २२ ॥

स्वर्गसाधकञ्च ॥

यशस्यम् ॥ २३ ॥

यशः कीर्त्तिस्तस्याः साधकम् ॥

आयुष्यम् ॥ २४ ॥

आयुषो वर्द्धनम् । यद्वेदस्यार्थज्ञानं तन्मुक्तिसाधकं स्वर्गसाधकं च भवति ॥

तथा विभक्तिपरिज्ञानम् ॥ २५ ॥

पदार्थज्ञानं तन्मुक्तिसाधकम् । यत्प्रकृतिप्रत्ययादिपरिज्ञानं तत् स्वर्गयश आयुषां साधकमित्ययं विभागो ज्ञानस्य द्रष्टव्यः ॥

अथापि भवति ॥ २६ ॥

अयमेवार्थः प्रकृत्या । अन्योऽपि श्लोको भवति, वेदस्याध्ययनाद्धर्मः सम्प्रदानात्तथा श्रुतः ॥

वर्णशोऽक्षरशो ज्ञानाद्विभक्तिपदशोऽपि च ॥ २७ ॥

वेदस्य पाठमात्रात्तावद्धर्मो भवति तथा शिष्येभ्यः सम्प्रदानात् । तथा श्रवणात्तथा वर्णपरिज्ञानात्तथाऽक्षरपरिज्ञानात् विभक्तिपरिज्ञानाच्च पदपरिज्ञानाच्चोत्तरोत्तरं धर्मो भवति । इत्येतदेवानुवर्त्तते ॥

त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ।
द्विचत्वारिंशद्व्यञ्जनान्येतावान्वर्णसंग्रहः ॥२८॥

शब्दस्वरूपचिन्तकैस्त्रयोविंशतिः स्वरा अकारादय उक्ताः । द्विचत्वारिंशद्व्यञ्जनानि कादीनि एतावान् वर्णसङ्घातः ॥

तस्मिन् ळ्ह्लजिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम् ॥ २९ ॥

ऌकारो दीर्घः प्लुताश्चोक्तवर्जम् ॥ ३० ॥

अधस्तनश्लोकरूपसूत्रेण वर्णानुक्त्वा अधुना ये माध्यन्दिनानान्नेष्यन्ते वर्णास्तान्निराकर्त्तुमाह । ढकारष्टवर्गीयो डकारश्च तत्प्रकृती ळ्हलकारौ जिह्वामूलीयो य उपध्मानीयश्च नासिक्यश्च एते वर्णा न सन्ति माध्यन्दिनानाम् ॥ किमेतावन्त एव नेत्युच्यते । ऌकारो दीर्घः । ताजीव्क्षाचौनित्यैवमादयो ये पठितास्तान् प्लुतान् वर्जयित्वा अन्ये प्लुता न सन्ति माध्यन्दिनानाम् ॥

वर्णदेवताः ॥ ३१ ॥

प्रकृतानां वर्णानां देवता वक्ष्याम इति सूत्रशेषः ॥

आग्नेयाः कण्ठ्याः ॥ ३२ ॥

कण्ठस्थाना वर्णा अग्निदेवत्या भवन्ति ॥

नैर्ऋत्या जिह्वामूलीयाः ॥ ३३ ॥

जिह्वामूलस्थाना वर्णा निर्ऋतिदेवत्या भवन्ति ॥

सौम्यास्तालव्याः ॥ ३४ ॥

तालुस्थाना वर्णाः सोमदेवत्या भवन्ति ॥

रौद्रा दन्त्याः ॥ ३५ ॥

दन्तस्थाना वर्णाः रुद्रदेवत्या भवन्ति ॥

ओष्ठ्या आश्विनाः ॥ ३६ ॥

ओष्ठस्थाना वर्णा अश्विदेवत्या भवन्ति ॥

वायव्या मूर्द्धन्याः ॥ ३७ ॥

मूर्द्धस्थाना वर्णा वायुदेवत्या भवन्ति ॥

शेषा वैश्वदेवाः ॥ ३८ ॥

एतानि स्थानानि विहाय येऽन्यस्थानजन्या वर्णास्ते वैश्वदेवा भवन्ति । स्पष्टार्थान्येतानि सूत्राणि ॥

तत्समुदायोऽक्षरम् ॥ ३९ ॥

तेषां वर्णानां एकीभावलक्षणः समुदायोऽक्षरं भवति । तद्यथा कखगघङेत्यादि ॥

वर्णो वा ॥ ४० ॥

वर्णसमुदायो वा वर्णो वाऽक्षरम्भवति । तद्यथा । अआइईउऊ इत्येवमादि । वर्णसमुदायोऽक्षरं भवति कखगघङ दध्ना । एवमादि । व्यवस्थितविभाषा चेयम् । स्वरः केवलोऽप्य-

क्षरं भवति। व्यञ्जनसमुदायस्तु स्वरसंहित एवाक्षरं भवति। तथा च प्रतिपादितम्। "स्वरोऽक्षरम्"। "सहाद्यैर्व्यञ्जनैः"। "उत्तरैश्चावसितैः" इति। प्रथमाध्याये एवेति॥

## अक्षरसमुदायः पदम्॥ ४१॥

अक्षराणां समुदायः पदं भवति। तद्यथा। इषे त्वा। ऊर्जे। त्वा। (१८अ० १क०) वाजः। च। मे॥

## अक्षरं वा॥ ४२॥

अक्षरं वा पदं भवत्यक्षरसमुदायो वा पदं भवति। (५५अ० ५क०) इन्द्र। आ याहि। (४०अ० ८०क०) यः। उ। विद्यायाम्। (रताः)। अक्षरसमुदायः पदं भवति। इषे। त्वा। ऊर्जे। त्वा॥

## तच्चतुर्द्धा॥ ४३॥

तदेतत्पदं चतुर्द्धा भिद्यत इति सूत्रशेषः॥

## नामाख्यातोपसर्गनिपाताः॥ ४४॥

नामपदं यथा गौरश्वः पुरुषः हस्तीत्येवमादि। आख्यातपदं यथा पचति पठति गच्छति धावति वल्गतीत्येवमादि। उपसर्गपदं यथा प्र परा आ अभीत्येवमादि। निपातपदं यथा वा च कम् उचित् इत्यादि। नामाख्यातोपसर्गनिपाता इति बहुवचनं पदचतुष्टयापेक्षम्॥

## तत्र प्रति विशेषः॥ ४५॥

तत्र च वाक्यपदचतुष्टयं प्रति यो विशेषः स प्रतिपाद्यते वक्ष्यमाणेन सूत्रेणेति वाक्यशेषः॥

## क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्।

सत्वाभिधायकं नाम निपातः पादपूरणः ॥४६॥

अथ व्यवस्थया पदचतुष्टयस्य लक्षणं कर्त्तुमाह। क्रिया। कालः। कर्त्ता। सङ्ख्या। उपसर्गो विशेष इत्याख्यातार्थः। तत्र क्रियैव प्रधानमुपसर्गस्तु क्रियाया एव विशेषं करोति। यथा पचतीत्यत्र पाचकः प्रतीयते। पुनः प्रपचतीत्युक्ते आदिकर्त्ता प्रतीयते। एवं गच्छत्यागच्छतीत्यादिषु द्रष्टव्यम्। सत्वं धातुः। कारकं विभक्तिरिति नाम्नोऽर्थः। तत्र सत्त्वमेव विशेषतोऽभिधीयते। निपातस्त्वर्थासम्भवे पादपूरणो भवति ॥

चतुर्दश निपाता येऽनुदात्तास्तेऽपि सञ्चिताः।
निहन्यते खल्वाख्यातमुपसर्गचतुष्टये ॥ ४७ ॥

एवं नामाख्यातोपसर्गनिपातानामर्थभेदं व्याख्यायाधुना स्वरसंस्कारावपि तत्रोक्तावेवैतौ प्रतिपादयति चतुर्दशेति। चतुर्दश निपाता येऽनुदात्तास्तेऽपि अधस्तात्सञ्चिता एव वा च कमुचिदित्यादिसूत्रेण। निपातग्रहणमुपलक्षणम्। नाम्नामपि स्वरः सूत्रविहित एव। यथा "नो नौ मे मदर्थे त्रिष्वेकेषु" इत्यादिना। यच्च पदचतुष्टये आख्यातमुक्तं तन्निहन्यते अनुदात्तं भवति उपसर्गादीनां पदानां परभूतम्। उपसर्गे विशेषकृत्। सत्त्वाभिधायकन्नाम निपातः पादपूरणः इत्येतन्नामानुपूर्वीमङ्गीकृत्यैतदुक्तम्। निहन्यते खल्वाख्यातमुपसर्गाणां चतुष्टय इति। खलुशब्द उपलक्षणार्थः। उपसर्गाणामपि तत्र स्वरो विहित इति "उपसर्ग उपसर्गे" इत्यादिना। एतदुक्तं भवति। यदधस्तान्मया प्रतिज्ञातं "स्वरसंस्कारयोश्छन्दसि नियमः" इति तत्कृत्स्नं प्रतिपादितमित्यर्थः। अतः कृत्स्नमिदं शास्त्रमिति ज्ञात्वा आदर्त्तव्यं शिष्यैः ॥

अथ पदगोत्राणि ॥ ४९ ॥

एवं पदचतुष्टयगोत्राणि वक्ष्यन्त इति सूत्रशेषः ॥

भारद्वाजकमाख्यातं भार्गवं नाम भाष्यते।
वासिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः॥५०॥

भरद्वाजेन दृष्टमाख्यातं भारद्वाजगोत्रं वा भारद्वाजसगोत्रं वा तथा भृगुणा दृष्टं नाम भार्गवगोत्रं भार्गवसगोत्रं वा तथा वसिष्ठेन दृष्टा उपसर्गा वासिष्ठगोत्रं वासिष्ठसगोत्रं वा तथा काश्यपेन दृष्टा निपाताः काश्यपगोत्राः काश्यपसगोत्रा वा ॥

अथ पददेवताः ॥ ५१ ॥

अथ पदानां देवता वक्ष्यन्त इति सूत्रशेषः ॥

सर्वन्तु सौम्यमाख्यातं नाम वायव्यमिष्यते॥
आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः॥५२॥

सर्वमाख्यातं सोमदैवत्यम्। सर्वन्नाम वायुदैवत्यम्। अग्निदैवत्या उपसर्गाः। निपाता वरुणदैवत्याः॥

अथ वर्णदेवताः ॥ ५३ ॥

इत्याद्युपासनार्थमुक्तम्। एवं ह्युपासिताः सन्तोऽर्थानभिज्ञस्यापि पुरुषस्य फलप्रदा भवन्ति। यो वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्त्तं वाऽऽपद्यते प्रमीयते पापीयान् भवतीत्येवमादिदोषेण सम्बध्यते। घृतकुल्या मधुकुल्या इत्येवमादिभिस्तु गुणैः सम्बध्यत एव ॥

इत्याह स्वरसꣳस्कारप्रतिष्ठापयिता भगवान् कात्यायनः ॥ ५४ ॥

एवं स्वरसंस्कारयोः प्रतिष्ठापयिता भगवान् कात्यायनः इदं शास्त्रमाह ॥

इष्टं इष्टिः ॥ ५५ ॥

इत्युक्तार्थः ॥

इति कात्यायनकृतौ प्रातिशाख्यसूत्रेऽष्टमोऽध्यायः ॥

इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते मातृमोदाख्ये प्रातिशाख्यभाष्येऽष्टमोऽध्यायः समाप्तः ॥

---